# आनन्दाश्रमसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः ११८

शंकरशास्त्रिकृतगौरीव्याख्यायुता-श्रीकुबेरभट्टप्रणीता-

# दत्तकचन्द्रिका ।

सेयं

वे० शा० सं० रा० मारुलकरोपाह्वै रङ्गनाथ[illegible]

शंकरशास्त्रिभिः संशोधिता ।

एतत्पुस्तकं

बी. ए. इत्युपपदधारिभिः

विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

श्रीमत् ' महादेव चिमणाजी आपटे

महाभागप्रतिष्ठापिते

आनन्दाश्रम[illegible]

आयसा[illegible]

# अथाऽऽदर्शपुस्तकोल्लेखपत्रिका ।

एतस्या दत्तकचन्द्रिकायाः प्रत्यन्तराणि यैः परहितप्रवणस्वान्तैः संशोधन-र्माणि सहायार्थं प्रदत्तानि तेषां नामादीनि प्रत्यन्तरसंज्ञासहितानि कृतज्ञतया प्रदर्श्यन्ते ।

( क. ) संज्ञितम्—पण्डितप्राण—भगवान्शास्त्री धारूरकर इत्येतेषाम्—(मुद्रितं भाषान्तरसहितम् ) ।

( ख. ) संज्ञितम्—श्रीमज्जगद्गुरुकरवीरपीठग्रन्थसंग्रहालयस्थम् । ( मुद्रितं सटीकम् ) ।

( ग. ) संज्ञितम्—व्याकरणाचार्य—महेश्वरशास्त्री जोशी ( संस्कृतकॉलेज पुणें ) इत्येतेषाम्—( मुद्रितं हिन्द्यनुवादसहितम् ) ।

समाप्तेयमादर्शपुस्तकोल्लेखपत्रिका ।

# अथ शुद्धिपत्रम् ।

| पृ. | प. | अशुद्धम् | शुद्धम्. |
|---|---|---|---|
| ६१ | २ | प्राप्तपितामह | प्राप्तमातामह |
| ६२ | १२ | रभ्य जनकपिता | रभ्य पंपिता |
| १०० | ३ | धनाधिकारि | धनानधिकारि |

इति शुद्धिपत्रम् ।

## उपोद्घातः ।

### पायादपायाज्जगदीश्वरो नः ।

कुबेरभट्टोन्नीताऽस्ति नाम्ना दत्तकचन्द्रिका ।
तदर्थबोधसंसिद्ध्यै टीकां निर्माय शांकरीम् ॥ १ ॥
अधुना तदुपोद्घातः स्मृत्वा संस्थाधिदैवतम् ।
आनन्दाश्रमसंस्थेन शंकरेण वितन्यते ॥ २ ॥

उप समीप उद्धृत्य हन्यते ज्ञायत इत्युपोद्घातः । प्रकृतार्थनिर्वाहकसाधारणपरिभाषेति यावत् । तथा च 'चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः, इत्यभियुक्तोक्तलक्षणोऽर्थः प्रस्तूयते—दत्तकचन्द्रिकाभिख्यः स्वल्पो निबन्धः प्रमाणभूतो धर्मशास्त्रान्तर्गतमेकं विषयमधिकृत्य भट्टकुबेरेण विदुषा निरमायीति प्रथितमेतत् । दत्तकचन्द्रिकेति नाम्नैवास्य निबन्धस्य विषयः परिज्ञातो भवति । तथा हि—दानार्थकदाधातोः क्तप्रत्यये ददादेशे स्वार्थे कनि च कृते दत्तकशब्दो निष्पन्नः । मात्रा पित्रा परस्मै दत्तः पुत्रस्तदर्थः । तदुक्तं स्मृतौ—'दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत्' ( वत्सव्यासौ ) इति । चन्द्रिकाशब्दो यद्यपि चन्द्रिका कौमुदी ज्योत्स्नेति कोशाच्चन्द्रप्रभायां शक्तस्तथाऽप्यत्र सिद्धान्तकौमुदीत्यत्रेव प्रकाशकत्वसाम्याच्चन्द्रिकेव चन्द्रिकेति लक्षणया प्रकाशक इत्यर्थकः । अत्र कृपासिन्धुरित्यत्र सिन्धुपदसामर्थ्यात्कृपायां जलत्ववच्चन्द्रिकापदसामर्थ्याद्दत्तके चन्द्रत्वं व्यङ्ग्यमिति बोध्यम् । दत्तकस्य चन्द्रिका दत्तकचन्द्रिकेति षष्ठीतत्पुरुषेण 'केन कीदृक् कदा कस्मै कस्मात् कः क्रियतां सुतः' इत्यादिदत्तकसंबन्धिनिर्णेयपदार्थप्रकाशिकेत्यर्थः संपद्यते । यथाऽन्धकारे लीना घटपटादयः पदार्था न स्वतः प्रत्यक्षी भवन्ति किंतु चन्द्रिकयैव, तथा दत्तकसंबन्धिनः पदार्था नान्यस्मात्प्रतीयन्तेऽपि तु चन्द्रिकयैव प्रकाश्यन्ते । एतेन दत्तकपुत्रविधिविषयकोऽयं निबन्ध इति स्पष्टमेवावगम्यते ।

ननु यदुक्तं पुत्रदानविधिविषयकोऽयं निबन्ध इति तदसमीचीनमिव भाति । यतो नारदेन—निक्षेपं पुत्रदारं च सर्वस्वं चान्वये सति । आपत्स्वपि हि कष्टासु वर्तमानेन देहिना । अदेयान्याहुराचार्याः' इति पुत्रदारसर्वस्वानां देयत्वनिषेधाभिधानात् । न चायं पुत्रादीनां पित्रादिस्वामिकानामत एव दानार्हाणां निषेधोऽनुपपन्न इति वाच्यम् । यथा यजमानधनानामपि माषाणां 'अयज्ञिया वै माषाः' इति निषेधश्रुतेरयज्ञियत्वं तथा पुत्रदारसर्वस्वानि स्वभूतान्यपि 'स्वं कुटुम्बाविरोधेन देयं दारसुतादृते । नान्वये सति सर्वस्वं यच्चान्यस्मै प्रतिश्रुतम्'

( या० स्मृ० २ । १७५ ) । अस्यार्थः—स्वमात्मीयं द्रव्यं भार्यापुत्रव्यतिरिक्तं कुटुम्बस्यावश्यभरणीयस्य भरणाविरोधेन देयं कुटुम्बभरणावशिष्टं देयमिति यावत् । विरोधश्चात्र निःस्वतया भोजनाच्छादनोच्छेदनिबन्धनः संमतो न तु ताम्बूलादिभोगसाधनवैकल्यनिबन्धनः । एवं देयमभिधायादेयमाह—अन्वये पुत्रपौत्रादिसंताने विद्यमाने सति सर्वस्वं सर्वं धनं न देयम् । पुत्रानुत्पाद्य संस्कृत्य वृत्तिं चैषां प्रकल्पयेदिति स्मरणादिति । इत्यादिदाननिषेधकस्मृतिबलात्पुत्रादीनामदेयत्वावगमात् ।

अत्रोच्यते—निरुक्तनारदयाज्ञवल्क्यवचने तत्समानार्थकान्यन्यवचनानि चैकपुत्रविषयकाणि बोद्धव्यानि । यस्यैक एव पुत्रस्तेन तादृशैकः पुत्रो नैवं देय इत्येकपुत्रदाननिषेधकानीत्यर्थः । तत्र हि पुत्रदाने कृते संतानविच्छेदापत्तेः । अत एवाऽऽह वासिष्ठः—' न त्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा । स हि संतानाय पूर्वेषाम् ' इति । तथा च यस्यानेके पुत्राः स्युस्तेनैव पुत्रदानं कर्तव्यमित्युक्तं भवति । अनेकपुत्रेष्वपि मातापितृवियोगसहनक्षम एव पुत्रो देयः । तदुक्तं कात्यायनेन—विक्रयं चैव दानं च न नेयाः स्युरनिच्छवः । दाराः पुत्राश्च सर्वस्वमात्मन्येव तु योजयेत् । यथा दारा विक्रयं दानं वा भर्त्रा न नेयास्तथा मातापितृभ्यां पुत्रा अपि मातापितृवियोगानिच्छवो न देयाः स्युरिति ।

नन्वेवमपि कथं पुत्रो दानार्हः । यतः स्वं कुटुम्बाविरोधेनेत्यत्र स्वशब्द आत्मीयवाची । स्वकीयमित्यर्थः । स्वकीयत्वं च स्वनिष्ठस्वामितानिरूपितस्वतावत्त्वम् । यथेष्टविनियोगार्हत्वमिति यावत् । तादृशं द्रव्यं दानार्हमित्युक्तम् । पुत्रे तु केवलं जन्यजनकभावलक्षण एव संबन्धो न स्वस्वामिभावलक्षणो दानयोग्यः संबन्ध इति चेन्न ।

इममेवाऽऽशङ्कां मनसि निधाय ' शुक्रशोणितसंभवः पुरुषो मातापितृनिमित्तकः । तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतः ' इत्यत्र वसिष्ठेन उत्पादनमात्रेण पितृभ्यामार्जितत्वाद्यथेष्टविनियोगार्हत्वं पुत्रस्याप्यस्तीति मत्वा ' प्रभवतः ' इत्युक्तम् । तेन पुत्रोऽपि देयभूतो भवतीत्यभिप्रायात् ।

आस्तामियं कथा । सोऽयं दत्तकचन्द्रिकाभिधो निबन्धो धर्मशास्त्रान्तर्गत इत्युक्तत्वादादौ धर्मशास्त्रं नाम किम् । तस्य चोद्भवः कथं कस्माच्च संजात इत्येतद्विषयेऽत्रैषद्दिग्दर्शने क्रियमाणे सति न तदप्रस्तुतं स्यादिति मत्वा किंचिल्लिलिखिषामि—

तत्राऽऽदौ धर्मशब्दार्थो निरूप्यते । धृधातोर्मन्प्रत्ययेन निष्पन्नो धर्मशब्दो यद्यपि ' धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ । अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे ' इति मेदिनीकोशादनेकार्थकस्तथाऽपि धरति लोकं ध्रियते वा लोकोऽनेनेति व्युत्पत्त्या जगद्धारको धर्म इति लभ्यते । विश्वामित्रस्तु—यमार्याः क्रियमाणं तु

श्रीसन्न्यागमवेदिनः । स धर्मो यं विगर्हन्ति तमधर्मं प्रचक्षते । इति धर्मसामान्यलक्षणमाह । मनुः—विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः । हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत ( म० स्मृ० २ । १ ) इति । मनूक्तधर्मलक्षणसंग्राहकाः श्लोकाः—वेदविद्भिर्ज्ञात इति प्रयुञ्जानो विशेषणम् । वेदादेव परिज्ञातो धर्म इत्युक्तवान्मनुः । हृदयेनाऽऽभिमुख्येन ज्ञात इत्यपि निर्दिशन् । श्रेयःसाधनमित्याह तत्र ह्यभिमुखं मनः । वेदप्रमाणकः श्रेयःसाधनं धर्म इत्यतः । मनूक्तमेव मनुयः प्रणिन्युर्धर्मलक्षणम् ॥ इति । मेधातिथिः—धर्मशब्दश्च लोके श्रेयःसाधने प्रत्यक्षादिभिर्लौकिकैः प्रमाणैः शब्दादितरैरविहिते प्रयुज्यत इत्याह । अलौकिकश्रेयःसाधनत्वेन विहितक्रियात्वं धर्मत्वमिति गागाभट्टः । वेदबोधितेष्टसाधनताको धर्म इति मीमांसापरिभाषाकाराः । वेदेन प्रयोजनमुद्दिश्य विधीयमानोऽर्थो धर्म इति मीमांसान्यायप्रकाशे । धर्माधर्मविहद्धं स्यादिति तार्किकाः । आचारः परमो धर्म इति सांप्रदायिकाः । ' अयं हि परमो धर्मो यद्योगेनाऽऽत्मदर्शनम् ' इति पातञ्जलाः । एतत्सर्वमनुसंधाय भगवाञ्जैमिनिः ' अथातो धर्मजिज्ञासा ' इति प्रथमसूत्रेण धर्मजिज्ञासामभिधाय धर्मशब्दार्थं प्रतिपिपादयिषुः ' चोदनालक्षणोऽर्थो धर्मः ' इति द्वितीयसूत्रेण धर्मलक्षणं प्राणैषीत् । वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्म इति तदाशयः । सर्वेष्वप्येषु पक्षेष्विष्टानिष्टप्राप्तिपरिहारोपायत्वं न व्यभिचरतीतीष्टप्राप्त्यनिष्टपरिहारालौकिकोपायो धर्म इति सिद्धम् ।

शास्त्रलक्षणं तु—प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन च ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥ इति ।

एवं च निरुक्तलक्षणस्य धर्मस्य प्रतिपादकं वचनजातं धर्मशास्त्रमित्यर्थः ।

तदैक्षत बहु स्यां प्रजायेय ( छा० ६ । २ । ३ ) सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः ( म० स्मृ० १ । ८ ) इति श्रुतिस्मृत्युदितसृष्ट्यारम्भादद्ययावदबाधितप्रचालितसनातनवैदिकधर्मविषये भ्रमप्रमादादिदोषरहिता अत एवापौरुषेयवेदा मुख्यं प्रमाणं भवेयुः । तमिममर्थं महर्षिर्मनुरप्यन्वमोदत ' वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् । आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ' ( म० स्मृ० २ । ६ । इति वचनेन ।

ननु किं नाम वेदत्वमिति चेत्—वैदिकयाज्ञिकानां मन्वादीनामभियुक्तानां वेद इति प्रसिद्धविषयाः शब्दा वेदा इति मन्त्राधिकरणन्यायात् ( जै० अ० २ पा० १ अधि० ७ ) लभ्यते । अपौरुषेयवाक्यत्वं वेदत्वमित्येके । मीमांसासिद्धपौरुषेयान्यजातीयव्याख्यानवाक्यत्वं तद्धित्यन्ये । ते पुनश्चतुर्विधाः—ऋग्यजुःसामाथर्वलक्षणा देवलादिभिर्विभज्य प्रतिपादिताः । तत्र पादेनार्थेन चोपेता वृत्त-

पद्यो मन्त्र ऋक् । वृत्तगीतिविवर्जितत्वेन प्रश्लिष्टपठितं यजुः । गीतिरूपो मन्त्रः साम । अदृष्टद्वारा दृष्टप्रयोजनककर्मप्रतिपादकवाक्यबहुलश्चाथर्वा । खिलशुक्रियौ त्वेतच्चतुष्टयान्तर्भूतावेव । तत्रानिरुक्त इदानीनुष्ठानप्रयोजको वेदभागः खिलः । शुक्रीकत्वेन ब्राह्मणे कीर्तितो वेदभागः शुक्रियः । अथैतेषामुपवेदाः—

आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः ।
अर्थशास्त्रं चतुर्थं चेति क्रमेण बोद्धव्याः ॥

अथैतेऽपि चत्वारो वेदाः प्रत्येकं द्विविधा मन्त्रब्राह्मणभेदात् । तत्र यानि प्रयोगकालेऽनुष्ठानौपयिकार्थाभिधानरूपाणि वेदवाक्यानि तानि मन्त्रशब्देनोच्यन्त इति 'तच्चोदकेषु मन्त्राख्या' ( जै० सू० २ । १ । ३२ ) इत्यधिकरणे व्यवस्थापितम् । यत्राभियुक्तानां मन्त्रप्रसिद्धिः स मन्त्र इति पार्थसारथिमिश्राः । भगवान् सुगृहीतनामा जैमिनिरप्यूहप्रवरनामधेयानां मन्त्रत्वनिरासाय 'अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः स्यात्' ( जै० सू० २ । १ । ३४ ) इति मन्त्रप्रसिद्धिमेवोपलक्षयति । आहुश्च भट्टपादाः—'याज्ञिकानां समाख्यानं विज्ञेयं मन्त्रलक्षणम्' इति । मन्त्रभागातिरिक्तो वेदभागो ब्राह्मणम् । यदाह—'शेषे ब्राह्मणशब्दः' ( जै० सू० २ । १ । ३३ ) । मन्त्रवाक्यावशिष्टं वेदवाक्यं ब्राह्मणमिति तदर्थः ।

ते च वेदा अर्थगाम्भीर्यवन्तोऽतिविस्तृताश्चेत्यल्पप्रज्ञानां मनुष्याणां यथावदर्थबोधनाय नालं स्युरिति धीक्ष्याऽऽचारव्यवहारप्रायश्चित्तरूपेषु त्रिविधधर्मस्कन्धेषु परमकारुणिकैर्मन्वादिभिर्महर्षिभिः सुसंगतार्थाः सुगमाश्चानेकाः स्मृतयो लोकोपकृतये व्यधायिषत । ते च स्मृतिकारा मन्वत्र्यादयो विंशतिर्याज्ञवल्क्यस्मृतावुक्ताः । ततोऽन्येऽपि जाबाल्यादय उपस्मृतिकारा बहव उपलभ्यन्ते ते सर्वेऽप्यत्र ग्राह्याः । किंच तत्तच्छाखीयानि श्रौतसूत्राणि गृह्यसूत्राणि च गृह्यन्ताम् । यतः प्राचीनार्वाचीननिबन्धकारैस्तान्यपि स्मृतिशब्देनैवोल्लेखितानि दरीदृश्यन्ते । तत्र वेदैरविरुद्धाः स्मृतयो धर्मे प्रमाणम् । समर्थितं च स्मृतिप्रामाण्यं महर्षिणा जैमिनिना प्रमाणलक्षणीयतृतीयपादे 'अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात्' ( जै० सू० १ । ३ । २ ) इति सूत्रेण । वेदविरुद्धानां स्मृतीनां प्रामाण्यं खण्डितं तेनैव 'विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम्' ( जै० सू० १ । ३ । ३ ) इत्यनेन तत्रैव । अद्वैतविद्याप्रतिष्ठापनाचार्याणां शिवावतारशंकरभगवत्पादानामप्यनुमतोऽयं पन्थाः । यतस्तैरविरोधाध्याये स्मृत्यधिकरणे ( अ० २ पा० १ अधि० १ ) वेदमूलानां स्मृतीनां प्रामाण्यं तद्विरुद्धानां चाप्रामाण्यं जैमिनीयवचनं प्रमाणयद्भिर्महता संरम्भेण व्यवस्थापितम् । श्रुतिस्मृत्योर्विरोधे श्रुत्या स्मृतेर्बाध एव नतु विकल्प इत्युक्तं भट्टपादेनापि तन्त्रवार्तिके विरोधाधिकरणे—

प्रमाणपदवीं यावन्नाऽऽरोहत्यन्त हि स्मृतिः ।
बाध्यते तावदत्यन्तं श्रुत्याऽन्यनिरपेक्षया ।
स्मृतेर्धर्मप्रमाणत्वं न तावत्स्वत इष्यते ।
तुल्यकक्षतया येन विकल्पपदवीं व्रजेत् ॥ इति ।

श्रुतिस्तावत्स्वयमेव स्वविषये प्रमाणम् । स्पष्टं चैतदभिहितं बादरायणीयस्मृत्यधिकरणे—' वेदस्य हि निरपेक्षं स्वार्थे प्रामाण्यं रवेरिव रूपविषये ' इति । स्मृतेस्तु श्रुतिमूलत्वात्प्रामाण्यं न तु वेदवत्स्वतः । तदुक्तम्—किंतु तस्याः प्रमाणत्वं श्रुतिमूलत्वकारितम्, इति । मूलश्रुत्यभावे स्मृतेरप्रामाण्यमेवेष्टम्—

श्रुतिं मुक्त्वा तु यन्मूलं स्मृतेरन्यत्प्रकल्प्यते ।
तेनैवास्याः प्रमाणत्वमत्यन्तं प्रतिहन्यते ॥ इति ।

अनेन प्रघट्टकेन श्रुतिस्मृतिभ्यां धर्मोऽजायतेत्युक्तं भवति । तदेतन्मनुना स्पष्टमभिहितम्—

श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ । (म०स्मृ०२।१०) इति ।

अत एव हेमाद्रौ यमः—

एतैर्यानि प्रणीतानि धर्मशास्त्राणि वै पुरा ।
तान्येवातिप्रमाणानि न हन्तव्यानि हेतुभिः ॥ इत्याह ।

श्रुतिस्मृतिभ्यामन्यान्यपि धर्मे प्रमाणं भवन्ति । तत्र शीलं ब्रह्मण्यतादिरूपम् । तदाह हारीतः—ब्रह्मण्यता देवपितृभक्तता । सौम्यता अपरोपतापिता अनसूयता मृदुता अपारुष्यं मैत्रता प्रियवादित्वं कृतज्ञता शरण्यता कारुण्यं प्रशान्तिश्चेति त्रयोदशविधं शीलमिति । महाभारते—

अद्रोहः सर्वभूतानां कर्मणा मनसा गिरा ।
अनुग्रहश्च ज्ञानं च शीलमेतद्विदुर्बुधाः ॥ इति ।

तथा सदाचारोऽपि प्रमाणम् । सदाचारो नाम—

साधवः क्षीणदोषाः स्युः सच्छब्दः साधुवाचकः ।
तेषामाचरणं यत्तु सदाचारः स उच्यते ॥

इति विष्णुपुराणे दर्शितः । आचरणमलौकिकं तच्च लौकिकभोजनादिष्वुदासः । आत्मनस्तुष्टिरपि धर्मे प्रमाणम् । धर्मसंदेहे वैदिकसंस्कारवासितात्मनामेकत्र पक्षे मनःपरितोषस्तुष्टिरिति यावत् । तदाहुर्भट्टपादाः—

एतेन वैदिकानेकधर्मश्रीसंस्कृतात्मनाम् ।
आत्मतुष्टेः प्रमाणत्वं सिद्धं धर्मप्रसिद्धये ॥ इति ।

सेयमात्मतुष्टिर्वैकल्पिकपदार्थविषया ज्ञेया । तदाह गर्गः—‘ वैकल्पिके आत्मतुष्टिः प्रमाणम् ’ इति ।

यद्यपि—वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।

एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् । ( म० स्मृ० २ । १२ ) ॥

इति मनुना चतुर्विधमेव धर्मलक्षणमुक्तं नतु शीलं तत्र परिगणितं तथाऽपि हारीतोक्तस्य शीलस्य सदाचार एवान्तर्भावो बोध्य इति न किंचिन्न्यूनम् ।

एवमितिहासपुराणवचनान्यपि प्रमाणानि । तदुक्तं नारदीये—

वेदाः प्रतिष्ठिता देवि पुराणेनात्र संशयः ।

बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥

इतिहासपुराणैश्च कृतोऽयं निश्चलः पुरा ।

यन्न दृष्टं हि वेदेषु तद्दृष्टं स्मृतिभिः किल ।

उभाभ्यां यन्न दृष्टं हि तत्पुराणेषु गीयते ॥ इति ।

तत्र व्यासेन प्रोक्तान्यष्टादश महापुराणानीत्युच्यन्ते ।

अष्टादश पुराणानि कृत्वा सत्यवतीसुतः ।

भारताख्यानमखिलं चक्रे तदुपबृंहितम् । इति मात्स्यात् ।

अष्टादश महापुराणानि तु—मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयम् ।

अनापलिङ्गकूस्कानि पुराणानि पृथक् पृथक् ।

अस्यार्थः—मात्स्यं मार्कण्डेयं च । भविष्यं भागवतम् । ब्राह्मं ब्रह्मवैवर्तं ब्रह्माण्डं च । विष्णुवामनवराहवायुपुराणानि । अग्नि, नारद, पद्म, लिङ्ग, गारुड, कूर्म, स्कन्दपुराणानीति मिलित्वाऽष्टादश । पुराणसामान्यलक्षणम्—

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।

वंशानुचरितं चेति पुराणं पञ्चलक्षणम् ॥ इति ।

प्रतिसर्गः संहारः । केन कं प्रति किमधिकृत्य पुराणमुक्तं कस्य च पुराणस्य कियती ग्रन्थसंख्येत्येवमादिकं मिताक्षराटीकायां बाळंभट्टयां द्रष्टव्यम् । सनत्कुमाराद्युक्तान्यष्टादशोपपुराणान्यपि मुनिभिः प्रोक्तानि । तदेतेषां पुराणानां सात्त्विकराजसतामससंकीर्णभेदेन चतुरः प्रकारानुक्त्वा केषु कः प्राधान्येन वर्ण्यते तदाह मात्स्येऽध्याये ( ५३ )—

सात्त्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः ।

राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः ।

तद्वदग्नेश्च माहात्म्यं तामसेषु शिवस्य च ।

संकीर्णेषु सरस्वत्याः पितॄणां च निगद्यते ॥ इति ।

पञ्चरात्रेषु तन्त्रग्रन्थेषु च शिवविष्णुशक्तिगणेशभैरवादीनां नानाविधान्युपासना-

न्यङ्कुताश्च सिन्द्धयो वर्णिताः । तन्त्राणि पञ्चरात्राणि चोपलब्धान्यनुपलब्धानि च बहूनि सन्ति । महत्सु धर्मनिबन्धेषु केषांचिन्नामान्युपलभ्यन्ते । एतेषामपि धर्मे प्रामाण्यं श्रुतिस्मृत्याद्यविरुद्धांशे बहुधा मन्यतेऽभियुक्तैः ।

सर्वस्यापि जनिमतः स्वाभिलषिते सुखे स्वाभाविकी प्रवृत्तिः संदृश्यते । सैव च शास्त्रानुसारिणी चेदुत्तरोत्तरं सुखपर्यवसायिन्येव स्यात् । अतो मनुष्यमात्रेण शास्त्रानुसारेणैव व्यवहारेऽपि वर्तितव्यम् । तदेव श्रेयस्करं भवेदिति मन्ये । उपर्युक्तश्रुतिस्मृत्यादीनां पञ्चरात्रान्तानामभिधेयो धर्म इति प्रदर्शितम् । धर्मश्च वेदप्रमाणकं श्रेयःसाधनं कर्मेत्यप्युक्तम् । तच्च द्विविधं प्रवृत्तनिवृत्तभेदात् । तदाह मनुः—

प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ।
इह चामुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते ।
निष्कामं ज्ञानपूर्वं तु निवृत्तमुपदिश्यते ।

( म० स्मृ० १२ । ८८—८९ ) इति । वेदेष्विव स्मृत्यादावप्याचारव्यवहारादयः प्रवृत्तिधर्माः, यतिधर्ममोक्षोपायाध्यात्मविचारादयो निवृत्तिधर्माश्चोक्ताः संलक्ष्यन्ते । प्रवृत्तिधर्मोऽपि श्रौतस्मार्तभेदेन द्विधा । ज्योतिष्टोमादिर्यागः श्रौतः । स्मार्तस्तु षड्विधः—वर्णधर्म आश्रमधर्मो वर्णाश्रमधर्मो गुणधर्मो निमित्तधर्मः साधारणधर्मश्चेति । तत्राऽऽद्यो मद्यपानवर्जनादिः । द्वितीयो भैक्षचर्यादिः । तृतीयः पालाशदण्डधारणादिः । चतुर्थः शास्त्रीयाभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनादिः । पञ्चमः प्रायश्चित्तम् । षष्ठोऽहिंसादिः । प्रकृतो दत्तकचन्द्रिकायां भट्टकुबेरेण साङ्गोपाङ्गमुपवर्णितः कल्पसूत्रदत्तकविधिर्गृह्याग्निसाध्यत्वात्स्मृत्युक्तत्वाच्च स्मार्तधर्मोऽयमिति प्रतीयते ।

मनुयाज्ञवल्क्यस्मृतिचन्द्रिकाप्रभृतिषु त्रिस्कन्धधर्मग्रन्थेषु संस्कारप्रकरण औरसपुत्रप्रसङ्गेन व्यवहारकाण्डे दायविभागप्रकरणे द्वादशविधपुत्रप्रतिपादनप्रसङ्गेन च दत्तकप्रकरणं प्रसज्यमानं भवति । तथाऽपि तत्तत्र तत्रातिसंक्षेपेण लिखितत्वादेकत्रैव दत्तकसंबन्धिनः सर्वे विषया जिज्ञासुभिर्विलोकनीया न तैस्तत्रेतस्ततः प्रधावितव्यमित्येवं लोकोपकारं मनस्यनुसंधाय तैस्तैः पण्डितधौरेयैर्दत्तकविषयमधिकृत्य स्वातन्त्र्येणानेके निबन्धा न्यबन्धिषत । ते च यथा—दत्तकमीमांसा, दत्तकचन्द्रिका, दत्तकदर्पणं, दत्तकसिद्धान्तमञ्जरी, दत्तकमीमांसा, दत्तककौस्तुभः, दत्तकदीपकः, दत्तकभूषणं, दत्तकतिलकः, दत्तककौमुदी, पुत्रकल्पलतेत्यादयः ऐतिह्यवृत्तवक्तृपरम्परया श्रूयन्ते । श्री० मण्डलिकमहाशयकृतहिन्दुधर्मशास्त्रोपरिगताङ्ग्लग्रन्थीयप्रस्तावनायामप्येवं लिखितमस्तीत्येवं श्रूयते । नैव मया प्रत्यक्षतो दृष्टं नाप्यहमोषदपि (?) ईषदप्याङ्ग्लभाषाभिज्ञः । दत्तकमीमांसाद्वयमध्य एका नन्दपण्डितकृताऽध्यक्षतो दृष्टा सर्वत्र प्रसिद्धा प्रचलिता चास्ति । द्वितीया विद्यारण्यस्वामिकृतेति वदन्ति । प्रकृतदत्तकचन्द्रिका-

कारविषये प्राचीनग्रन्थकर्तृनिर्णायकेष्वितिहासज्ञपण्डितेषु परस्परं विवादो दृश्यते । स्मृतिचन्द्रिकाकारेण देवण्णभट्टेन दत्तकचन्द्रिका कृतेति केचिद्वदन्ति । अन्ये पुनः कुबेरभट्टेन प्रणीतेति प्राहुः । अपरे च विद्याभूषणरघुमणिपण्डितेन निरमायीति मन्यन्ते । तत्र च कारणमेवं वर्णयन्ति---दत्तकचन्द्रिकासमाप्तौ रम्यैषा चन्द्रिकेति योऽनुष्टुप् श्लोकः प्रोक्तः स पङ्क्तिद्वयेन लिखितश्चेत् प्रथमपङ्क्तेराद्यन्ताभ्यामक्षराभ्यां मिलिताभ्यां 'रघु' इति लब्धम् । द्वितीयपङ्क्तेराद्यन्ताभ्यामक्षराभ्यां मिलिताभ्यां 'मणिः' इति लभ्यते । द्व्यक्षरयोर्द्वयोः शब्दयोः पौर्वापर्येण संयोजने कृते 'रघुमणिः' इति नाम संपद्यते । एवंप्रकारेण ग्रन्थकृता स्वनामोद्धारोऽकारीति ग्रन्थकृत्कृतस्य स्वनामोद्धारस्य वाचकानामनायासतोऽवबोधार्थं ग्रन्थान्ते पठ्यमानोऽपि स श्लोकः पुनरत्र पठ्यते---

रम्यैषा चन्द्रिका दत्तपद्धतेर्दर्शिका लघु ।
मनोरमा संनिवेशै रङ्गिणां धर्मतारणिः ॥ इति ।

तदेतन्न रोचये । रघुमणिपण्डितानां समयः ( इ० स० १७८८ ) परिमितख्रिस्ताब्दीय इति पुराकालज्ञैराङ्ग्लपण्डितैः परिशोध्यो लापितोऽस्ति । नन्दपण्डितैश्च ( सं० १६७९ ) परिमिते वैक्रमाब्दे विष्णुस्मृतिटीका केशववैजयन्ती निरमायि---

वर्षे विक्रमभास्करस्य गमिते नन्दाद्रिषड्भूमिभिः ।
पूर्णे कार्तिकमासि वृश्चिकगते भानौ वृषस्थे रवौ ॥

इति टीकासमाप्तौ श्लोकश्रवणात् । तादृशवैक्रमसंवदः ख्रिस्ताब्दीकरणे कृते ( इ० स० १६२२ ) परिमितः कालः संपद्यते । तदनन्तरं च दत्तकमीमांसाऽकारि । केशववैजयन्तीदत्तकमीमांसयोरन्तराले समये दत्तकचन्द्रिकाऽऽत्मानमासादितवतीत्यग्रे सप्रमाणं निरूपयिष्यते । ततश्च दत्तकचन्द्रिकानिर्मितिसमये रघुमणीनां जन्मापि नाभूत्तत्र कथमिव रघुमणिर्दत्तकचन्द्रिकायाः कर्तेति वक्तुमपि युज्येत । किंच यदि तत्त्वत एवास्या रघुमणिः कर्ता स्यात्तर्हि प्राचीनार्वाचीनहस्तलिखितमुद्रितपुस्तकेषु मुखपृष्ठे कुटिलपद्धतिं परित्यज्य ऋजुमार्गेण दत्तकचन्द्रिकां प्रेचिक्षिक्षूणां निःसंदिग्धं ग्रन्थकर्तृनामावबोधार्थं स्वनामैवालेखिष्यद्रघुमणिः । किं कुबेरभट्टनामलेखने प्रयोजनम् । अपि च मनुष्यस्वभावोऽयमीदृशोऽभिलक्ष्यते---यदन्यकृतोऽपि ग्रन्थोऽन्येन केनाप्यपरिज्ञातः स्वमात्रनिकटवर्ती चेत्स्यान्मयैव कृतोऽयं ग्रन्थ इति लोके स्वनामैव प्रसिद्धयन्ति । सर्वथा तु सत्यस्यापलापोऽनुचितोऽन्ते दुःखप्रदश्चेति भिया निरुक्तकुटिलरीत्या तत्त्वतो ग्रन्थकर्तुर्नामोद्धारं कुर्वन्ति । यथा---कुरुपाण्डवयोः संग्रामे प्रचलिते सति द्रोणाचार्याणां कौरवसेनाध्यक्षतायां संप्रवृत्तायां कदाचिद्भीमसेनेन गजघटामर्दनप्रसङ्गेऽश्वत्थामनामा महाहस्ती मारितः ।

समनन्तरं च सर्वत्र रणक्षेत्रेऽश्वत्थामा हत इति महान् कोलाहल उद्भूत । क्रमेण च तादृशे कोलाहले द्रोणाचार्याणां कर्णपथं समनुप्राप्ते पुत्रप्रेम्णा मोहितः शोकविह्वलो भूत्वा 'अश्वत्थामा बलिर्व्यासो हनुमांश्च विभीषणः । कृपः परशुरामश्च सप्तैते चिरजीविनः' इत्यभियुक्तोक्तस्वपुत्रस्य चिरजीवित्वं विस्मृत्य तत्र संदिहानो विललाप । कुरुपाण्डवसेनयोस्तदैक एव तुमुलः संमर्दोऽभूत् । तत्र कं प्रति विचारणीयं को हि नाम सत्यं वदेत् । भीमादयो हि व्यवहारसरणिमनुसरन्तो नैव विश्वासार्हाः । किंत्वेक एव धर्मराजः सत्यवाङ् नान्यथा ब्रूयादिति मनसिकृत्य तत्समीपं गत्वाऽप्राक्षीत् । तदा युधिष्ठिरेण यदुच्चारितं यच्च वेणीसंहारे भट्टनारायणोऽनूदितवांस्तादिदम्—

अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा
स्वैरं शेषे गज इति किल व्याहृतं सत्यवाचा इति ।

स्वैरं स्वगतमिवातीव मन्दमित्यर्थः । अत्राधर्मभीरुणा धर्मराजेन सत्यस्य सर्वथाऽपलापो मा भूदिति वक्ररीत्या स्वैरं शेषे गज इति व्याहारेण सत्यस्योद्धारः कृतस्तद्वदिति भावः । तथा च यदि वस्तुत एवेयं दत्तकचन्द्रिका रघुमणिना कृता स्याच्चेत्तर्ह्यन्यस्य नाम स्पष्टमुल्लिख्य स्वनाम्नोऽपलपनं निसर्गविरुद्धं किमिति कुर्याद्रघुमणिरिति त्वमेव विचारयेथाः । तस्माच्चेयं दत्तकचन्द्रिका रघुमणेः कृतिरिति निश्चप्रचम् ।

ननु निरुक्तमनुष्यस्वभावन्यायेनेयं दत्तकचन्द्रिका रघुमणिना न कृतेत्येवं न लभ्यते, प्रत्युत रघुमणिनैव कृतेत्येव लभ्यते । कथमिति चेदुच्यते । रघुमणिनैव प्रणीता दत्तकचन्द्रिका केनाप्यपरिज्ञाता भट्टकुबेरेण लब्धा । ततस्तत्प्रकाशनसमये स्वनाम प्रख्यापितवान् भट्टः । सत्यस्य सर्वथाऽनपलापार्थं वक्ररीत्या रघुमणिनामोन्नीतवानितीति चेद्भ्रान्तोऽसि । अत्र रघुमणिनैव कृतेयं दत्तकचन्द्रिकेति वदन् वादी प्रष्टव्यः—किं रम्यैषेति श्लोकसहितैव दत्तकचन्द्रिका रघुमणिना कृतेति मन्यसेऽथवा तादृशश्लोकविरहितेति । नाऽऽद्यः । वस्तुतः स्वकृते ग्रन्थेऽन्यस्य नामोल्लिख्य स्वनाम्नोऽपलपनस्य लोकस्वभावविरुद्धत्वेनानुचितत्वात्प्रयोजनाभावाच्च त्वदुक्तपूर्वपक्षस्यैवानुत्थानापत्तेः । रम्यैषेति श्लोकस्य कुबेरभट्टकृतित्वं विना पूर्वपक्षोत्थानासंभवात् । न द्वितीयः । रम्यैषेति श्लोकवर्जं दत्तकचन्द्रिकाया रघुमणिप्रणीतत्वे श्लोकमात्रस्य तु भट्टकुबेरप्रणीतत्वे च प्रमाणाभावात् । ग्रन्थारम्भं प्रतिज्ञायैकेन ग्रन्थः कृतस्तत्समाप्तिश्लोकस्त्वन्येन कृत इति वचनस्यार्धजरतीयत्वेन हेयत्वाच्च । आरम्भसमाप्त्योरेककर्तृकत्वकल्पनस्यैव न्याय्यत्वेन सामञ्जस्याच्च ।

सोऽयं सर्वोऽपि विचारः पण्डितरघुमणिभट्टकुबेरयोः समानकालिकत्वं गृहीतं धृत्वा समजनीति ज्ञेयम् । वस्तुतस्त्वनयोर्भिन्नकालिकत्वेन पण्डितरघुमणिसमयादतीव द्राघीयसि प्राक्तने काले दत्तकचन्द्रिकाऽऽविरासीदिति तन्निर्मितिसमये रघुमणीनां जन्मापि नाऽऽसीदिति पूर्वोक्तं न विस्मृतिं नेयमित्याशासे ।

यत्तूक्तं स्मृतिचन्द्रिकाया यः कर्ता देवण्णभट्टः स एव दत्तकचन्द्रिकायाः कर्तेति । तत्र चैत्रं बीजमाहु.—

मन्वादिवाक्यविवृतेषु विवादमार्गेष्वष्टादशस्वपि मया स्मृतिचन्द्रिकायाम् ।
कल्युक्तदत्तकविधिर्न विवेचितो यः सर्वः स चात्र विततो विवृतो विशेषात् ॥

र्थः कल्पुक्रदत्तकविधिः स्मृतिचन्द्रिकायां न विवेचितः सोऽत्र सर्वा विवृत इति संक्षेपतस्तदर्थः । अत्र विवृत इति विवरणक्रिया मुख्या । उद्देश्यत्वेन तस्याः प्राधान्यात् । न विवेचित इति वाक्यान्तर्गतविवेचनक्रिया तु विशेषणीभूता । अनुद्देश्यत्वेन तस्या गुणीभूतत्वात् । तत्र मयेति कर्तुर्गुणीभूतविवेचनक्रियायामन्वयं कृत्वा यो दत्तकविधिः स्मृतिचन्द्रिकायां मया न विवेचितः सोऽत्र सर्वो विवृतः । मयेति शेषः । एवमर्थपर्यवसाना-त्स्मृतिचन्द्रिकादत्तकचन्द्रिकयोः समानकर्तृकत्वं लभ्यते । स्मृतिचन्द्रिकायाः कर्ता च देवानन्दापरपर्यायो देवण्णभट्टः, देवंडभट्ट इति वा सुप्रसिद्ध एवेति ।

अत्रोच्यते---उपसर्जनानुपसर्जनयोः क्रिययोः समवायेऽनुपसर्जनक्रिययैव कर्तु-रन्वयो न्याय्यः, नोपसर्जनक्रियया । प्रधानाप्रधानयोः प्रधाने कार्यसंप्रत्यय इति न्यायात् । न हि राजपुरुषमानयेत्युक्ते पुरुषं प्रत्युपसर्जनीभूतेन राज्ञाऽऽनयनक्रि-याऽन्वेति, अपि तु राजानं प्रति प्रधानीभूतेन पुरुषेणैव । अत एव प्रधानीभूतः पुरुष एवाऽऽनीयते नोपसर्जनीभूतो राजा । अत एव च ' तमेतं वेदा-नुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन ' इति श्रुतौ वेदा-नुवचनादीनां प्रत्ययार्थतया प्रधानीभूतायामिच्छायामेवान्वयं स्वीकृत्य इच्छासाध-नतया वेदानुवचादीनि विधीयन्ते न तु विदन्तीति ज्ञानसाधनतयेति वाचस्पति-मिश्राः प्राहुः । अपि च स्मृतिचन्द्रिकाकारस्य देवण्णभट्टस्य समयं ( इ० स० १२०० ) त्रयोदशं शतकं प्रत्यपीपदन्नाङ्ग्लविद्यापण्डिताः । दत्तकचन्द्रिकानि-र्मितिसमयस्तु ( स० १६२२ ) एतदूर्ध्वमनुमीयते । तथा च मयेति कर्तु-रप्रधानीभूतविवेचनक्रियायामन्वयस्यायुक्तत्वेन प्रधानीभूतविवरणक्रियायामेवान्वयस्य शास्त्री-यत्वाद्दत्तकचन्द्रिकानिर्मितिसमये देवण्णभट्टानां जीवनात्यन्तासंभवाच्च स्मृतिचन्द्रिका-दत्तकचन्द्रिकयोः समानकर्तृकत्ववचने न किंचिदपि प्रमाणम् । तस्मात्परिशेषन्यायेनावशिष्टः कुबेरभट्ट एव दत्तकचन्द्रिकायाः कर्तेति पक्षोऽवशिष्यत इति सर्वं निरवद्यम् ।

अथासौ दत्तकचन्द्रिकायाः कर्ता कं देशं वंशं च स्वजनुषा कदाऽलमकार्षीत् किंचापरमनेन निबद्धमिति विचारणायां यावत्प्रवृत्तोऽहं प्रयत्नेनान्वेषमाणोऽपि मुद्रि-तपुस्तके स्थूलाक्षरैरुल्लिखितं कुबेरभट्ट इति नामान्तरा नान्यात्किंचिदप्युपलब्धि । वाचकमहाशाः किं वक्तव्यम् । महदेतत्खेदस्थानं यत्प्राञ्चो विद्वांसो विशालनि-बन्धलेखनचुञ्चवोऽपि ग्रामवंशादिनिजवृत्तलेखनेन नाऽऽत्मानं परिचाययन्तीति । इतर-प्रदेशापेक्षया बंगालप्रान्ते दत्तकचन्द्रिकाया अधिकं प्रामाण्यं दीयत इति श्रूयते । तेनानेन भट्टकुबेरेण बंगालीयपण्डितेन भाव्यमिति तर्क्यते । यथा द्रविडदेशे निर्णयसिन्ध्वाद्यपेक्षया कालमाधवग्रन्थ आधिक्येनाऽऽद्रियते तद्ग्रन्थप्रणेतुर्माधवाचा-र्यस्य द्राविडत्वादिति श्रूयते तद्देशीयब्राह्मणमुखात्तद्वदिति भावः ।

नन्दपण्डितैर्विष्णुस्मृतिटीका केशववैजयन्तीनाम्नी नन्दर्षिरसभूमिते ( १६७९ ) वैक्रमाब्दे प्राणायीत्युक्तम् । तदनन्तरं च कतिपयैरेव संवत्सरैर्दत्तकमीमां-साऽऽरचितेत्यनुमीयते । ' विशेषान्तरमस्मत्कृतायां विष्णुस्मृतिटीकायां केशववैजय-न्त्यामवधेयम् ' इति (सम० द० मी० पृ० २२४) तैरेव लिखितत्वात् । दत्त-कचन्द्रिका तु भट्टकुबेरेण दत्तकमीमांसायाः प्रागेव निर्मिताऽऽसीदिति दत्तकमीमां-

सीयलेखादेवावसीयते । स च लेखः पुनरयम्—“ व्याख्यातं चैवमेवापरार्कचन्द्रिकाभ्याम् । [ आपदि—प्रतिग्रहीतुरपुत्रत्वे ] इति ” ( सम० द० मी० पृ० १२२ ) इति । दत्तकचन्द्रिकायां ( पृ० ५ ) ‘ आपदि—पुत्रग्रहीतुरपुत्रत्वे ’ इत्युक्तम् । अत्र प्रतिशब्दस्थाने पुत्रशब्दनिर्दिष्ट इत्येतावान् परं विशेषः । अन्याऽऽनुपूर्वी उभयत्र समानैव । तथा ‘ [ दातृधने तु दानादेव पुत्रत्वनिवृत्तिद्वारा दत्त्रिमस्य स्वत्वनिवृत्तिर्दातृगोत्रनिवृत्तिश्च भवतीत्युच्यते ] इति चन्द्रिकाकारः ’ ( सम० द० मी० पृ० १६४ ) इत्युक्तम् । दत्तकचन्द्रिकायां तु ( पृ० १३ ) ‘ दातृधने दानादेव पुत्रत्वनिवृत्तिद्वारा दत्त्रिमस्य स्वत्वनिवृत्तिर्दातृगोत्रनिवृत्तिश्च भवतीत्युच्यते ’ इत्युल्लिखितम् । अत्रैकत्र तुशब्दोऽस्ति परत्र नास्तीत्ययं विशेषः । अन्याऽऽनुपूर्वी तूभयत्र तुल्यैव । अत्र दत्तकमीमांसाकारेण स्थलद्वये चतुष्कोणस्थं ग्रन्थद्वयं धनुष्कोट्यन्तर्गतदत्तकचन्द्रिकास्थग्रन्थेन समानानुपूर्वीकं पठितम् । यदि च दत्तकमीमांसायाः प्रागदत्तकचन्द्रिका नाभविष्यत्तर्हि तत्समानानुपूर्वीकं ग्रन्थं नापठिष्यन्नन्दपण्डितः । यस्माच्च तथा पठति तस्मान्निरुक्तचतुष्कोणस्थं ग्रन्थद्वयं दत्तकचन्द्रिकायाः सकाशादेवोद्धृतवानिति प्रतीयते । तेन च दत्तकमीमांसायाः प्रागेव दत्तकचन्द्रिकाऽऽसीदित्यनुमीयते ।

नन्वत्र स्थलद्वये निरुपपदचन्द्रिकाशब्दोच्चारणाच्चन्द्रिकाशब्देन देवण्णभट्टकृता स्मृतिचन्द्रिका गृह्यते । तस्याश्च दत्तकमीमांसातः प्राक्सत्त्वं पूर्वमुपपादितं सर्वसंमतं च तत् । तस्याः सकाशादेव निरुक्तं ग्रन्थद्वयं नन्दपण्डितेन कुतो नोद्धृतं स्यात् । तथा च नासौ दत्तकमीमांसीयलेखः स्वस्मात्प्रागदत्तकचन्द्रिकायाः सत्त्वमनुमातुं समर्थ इति वाच्यम् । तथा सति नैतद्युज्यते । स्मृतिचन्द्रिकायां हि (पृ० २८८) ‘ आपदि दुर्भिक्षादौ । अथवा ग्रहीतुरापदि पुत्राभावे ’ इत्युक्तम् । तथा ‘ दातुर्धने तु दानादेव...भवतीति मन्तव्यम् ’ इत्युल्लिखितम् । सेयं स्थलद्वयीया स्मृतिचन्द्रिकास्थग्रन्थानुपूर्वी न निरुक्तदत्तकमीमांसाग्रन्थेन समानाकारा भवति । अक्षराणां तदानुपूर्व्याश्च भिन्नक्रमत्वात् । भवति तु दत्तकचन्द्रिकया समानाकारा निरुक्तविशेषं वर्जयित्वा । शब्दानां तदानुपूर्व्याश्चात्यन्तमैक्यात् । तस्मादत्र चन्द्रिकाशब्देन दत्तकचन्द्रिकैव नन्दपण्डितेनाभिप्रेयत इति लक्ष्यते । नन्दपण्डितोऽयं महांस्तपस्वि आसीत् । तेन तस्य समग्रो जीवितकालः ( सं० १६१० आरभ्य सं० १७०० ) पर्यन्तमितीयान् दीर्घतरोऽभूदिति वदन्ति वक्तारः । खखर्षीन्दुपरिमितस्य वैक्रमाब्दस्य खिस्ताब्दीकरणे विहितेऽब्धिवेदरसभू- ( १६४२ ) मितः कालः संपद्यते । तत्र ( इ० स० १६२२ ) मध्ये केशववैजयन्तीटीकाकरणादनन्तरं स्थूलमानेनोपात्तैः संवत्सरैर्दत्तकमीमांसाऽऽरचिता नन्दपण्डितैः । ततः प्रागेव च दत्तकचन्द्रिकाऽऽसीदिति प्रतीयते । ततश्च केशववैजयन्तीदत्तकमीमांसयोरन्तरालं दत्तकचन्द्रिकानिर्माणकालः । स एव च कुबेरभट्टस्य समयः । एतावदेव कुबेरभट्टकालविषये यथाकथंचित्प्रमाणमुपलभ्यते । एतदपेक्षयाऽप्यधिकयोग्यं प्रमाणं केचन निष्कर्षेयुश्चेत्तदपि शिरआन्दोलनेन सादरं स्वीक्रियेत । आस्ताम् ।

इतः पर्यन्तं दत्तकचन्द्रिकाकर्तृविषयकं वृत्तं यावदुपलब्धं श्रुतमनुमितं वा तथावद्बुद्धिबलं निर्णीयाधुना ग्रन्थस्वरूपं प्रदर्शयितुमनुसंधीयते—दत्तकचन्द्रिकाभिख्ये स्वल्पे दत्तकविषयके निबन्धे समवलोक्यमाने सत्ययं कस्यचिन्महतो ग्रन्थस्य मूलाधारभूतो गेहस्येव पादः ( पाया ) इति प्रतीयते । एतस्यैवोपरि नन्दपण्डितैः

सुपरिष्कृतो दत्तकमीमांसाभिख्यः शोभनः प्रासादो व्यरचीवेति भासते। कुबेरभट्टप्रणीतायां दत्तकचन्द्रिकायामादित आरभ्य समाप्तिं यावत्षट् प्रकरणानि वरीवृतति। तत्र प्रथमं प्रकरणमनिर्दिष्टनामकमपि मया दत्तकाधिकारिप्रकरणमिति व्यवहारसौकर्यार्थमभिधीयते। अत्र प्रकरणे दत्तकग्रहणोद्देशः, दत्तकग्रहणाधिकारी, द्वाभ्यां मिलित्वैकः पुत्रो ग्राह्यो नवा, कतिविधाः पुत्रास्तत्र के प्रतिनिधयः कश्च मुख्यः, स्त्रिया दत्तकग्रहणदानयोरधिकारोऽस्ति न वा, कलियुगे के पुत्राः शास्त्रसंमताः, दत्तकलक्षणम्, ग्राह्यः पुत्रः कीदृशोऽपेक्षितः, भिन्नजातीयः पुत्रः पुत्रीकर्तव्यो नवा, दौहित्रभागिनेयौ ग्राह्यौ नवा, केन पुत्रो देयः केन च न देयः, इत्यादिप्रश्नाः सप्रमाणं निर्णयं प्रापिताः। पुत्रप्रतिग्रहविध्याख्ये द्वितीये प्रकरणे शौनकवसिष्ठाद्युक्तः परिग्रहविधिः, दत्तकविधेरावश्यकता, विध्यभावे हानिः, ग्राह्यः पुत्रः कियद्वायनः, केन प्रकारेण द्व्यामुष्यायणतेत्यादयः प्रश्ना दत्तोत्तराः। तृतीये दत्तककर्तृकश्राद्धनिर्णयाख्ये प्रकरणे सपिण्डीकरणान्तश्राद्धेषु दत्तकस्य कीदृशोऽधिकारः। सांवत्सरिकश्राद्धं दत्तकेन कया विधयाऽनुष्ठेयम्, जनकपालककुलयोर्दत्तकसापिण्ड्यं कियत्पुरुषपर्यन्तम्, द्व्यामुष्यायणविषये विशेषः, इत्यादयो विषया निरूपिताः। दत्तकाशौचनिर्णयाख्ये चतुर्थप्रकरणे शुद्धदत्तकस्य जनकपालककुलयोः परस्परमाशौचं द्व्यामुष्यायणविषये विशेषश्चेत्यादि निरचैषि। दत्तकदायविभागाख्ये पञ्चमप्रकरणे दत्तकस्य दायग्रहणाधिकारः कदा प्राप्नोति, दत्तकपौत्रस्य तद्ग्राहके पितरि मृते पितामहधनात्कियानंशो लभ्य इत्यादिविषया विशदीकृताः। अन्धपङ्ग्वाद्यनंशाख्ये षष्ठे प्रकरणेऽन्धपङ्ग्वादीनां पुत्राणां दायानधिकारितया भरणमात्रं, तदौरसक्षेत्रजयोः पितामहधनाधिकारित्वं, तद्गृहीतदत्तकपुत्रादेर्नास्ति पितामहधनाधिकार इत्यादि वर्णितम्। एवं विषयप्रतिपादनक्रमेण दत्तकचन्द्रिकाऽऽरचिता। अत्र दत्तकदायविभागाख्ये पञ्चमप्रकरणे दायविभागविषये परस्परविरुद्धानां नैकविधार्षवचनानां विरोधपरिहारेणैकवाक्यतासंपादनार्थं भट्टकुबेरेण स्वीयं कृत्स्नमिव पाण्डित्यं व्ययीकृत्यातीव सरसो ग्रन्थो लिखितः। स च प्रशंसनार्हः। तेनास्य कुबेरभट्टस्य सर्वसंघटने स्वरसवानान्तराशयोऽवगम्यते। नैतादृश एवंये प्रयत्नः क्रियमाणो दत्तकमीमांसायां समालक्ष्यते। इमान्येव षट् प्रकरणानि पुत्रोत्पादनविधिदत्तकपुत्रीविचारदत्तकधर्मविकलावयवसंबन्धविरुद्धसंबन्धप्रजाशब्दार्थमतमतान्तरप्रभृतिभिर्विषयैः प्रपूर्य साङ्गोपाङ्गं सुविस्तृतं सुपरिष्कृतं च मीमांसाप्राचुर्येण दत्तकसंबन्धिनियमान् प्रतिपादयन्ती दत्तकमीमांसा नन्दपण्डितैरारचितेति संभाव्यते। यतो दत्तकचन्द्रिकास्थ एकोऽपि विषयो दत्तकमीमांसायां प्रायो न परिहृतो दृश्यते। कुबेरभट्टस्यापि कतिषुचित्स्थलेषु शास्त्रार्थवर्णनचातुरी अनन्यसाधारणी संदृश्यते।

एवं यावद्बुद्धिबलं दत्तकचन्द्रिकोपोद्घातं संवर्ण्यातिगहनस्य शास्त्रीयग्रन्थस्य व्याख्याने प्रवृत्तस्य मम स्थले स्थले दृग्गोचरीक्रियमाणानां प्रमादानामावेदनेन क्षाम्यन्तु मदीयं साहसं क्षमाशीलाः प्रोत्साहयन्तु च ममैतं प्रयत्नमिति साञ्जलिबन्धं संप्रार्थ्य समर्पयत्यमुं लेखं रुंस्थाधिदैवतश्रीसच्चिदानन्दचरणसरोरुहयोः—

मारुलकरोपाख्यः शंकरशास्त्री-भारद्वाजः।

# सशांकर्यां दत्तकचन्द्रिकाया विषयानुक्रमः ।


| वि. | पृ. | पं. |
|---|---|---|
| मङ्गलाचरणं ग्रन्थप्रतिज्ञा च | १ | ५ |
| ग्रन्थप्रयोजनम् | ,, | ७ |
| केन पुत्रो ग्राह्यः कस्मै च ग्राह्यः | २ | १ |
| अत्रार्थेऽत्रिवचनम् | ,, | ३ |
| अपुत्रेणेत्यस्यार्थः | ,, | ६ |
| जातमात्रस्यौरसपुत्रस्यालोकतादिपरिहारकत्वम् | ,, | २५ |
| तादृश औरसे मृते पिण्डोदकार्थं पुत्रग्रहणम् | ३ | १ |
| अजातपुत्रस्य त्वलोकतादिपरिहारार्थं पिण्डोदकाद्यर्थं मृत्युभयार्थं पुत्रग्रहणम् | ,, | १० |
| एकादशविधः पुत्रप्रतिनिधिः | ४ | ६ |
| मनूक्तास्त्रयोदश पुत्राः | ४ | ६ |
| कलौ न सर्वेषां प्रतिनिधीनां शास्त्रानुज्ञेति कथनम् | ४ | ११ |
| अपुत्रेणेतिघटकपुत्रपदेन पौत्रप्रपौत्रयोरपि ग्रहणे हेतुमग्रहणे दोषं चाऽऽह | ,, | १३ |
| द्वाभ्यां त्रिभिर्वैकः पुत्रो ग्राह्यः | ४ | १३ |
| स्त्रियाऽपि भर्त्रनुज्ञया पुत्रो ग्राह्यः | ४ | १५ |
| जनकव्यतिरिक्तद्वाभ्यां नैकः पुत्रो ग्राह्यः | ४ | २० |
| शौनकोक्तो दत्तकविधिः | ५ | ४ |
| सगोत्रसपिण्डाभावे भिन्नगोत्रजः पुत्रो ग्राह्यः | ५ | ७ |
| भिन्नगोत्रजानां मध्ये दौहित्रभागिनेयमातृष्वसृसुतान्वर्जयेत् | ६ | ३ |
| असमानजातीयः पुत्रो न ग्राह्यः | ,, | ४ |
| ब्राह्मणेन क्षत्रियादिभिर्भिन्नजातीयोऽपि पुत्रो ग्राह्य इति मेधातिथिमतस्योपपत्तिकथनम् | ,, | १० |
| भिन्नजातीयस्य ग्रासाच्छादनभागित्वं नांशभागित्वमिति कथनम् | ७ | ४ |
| सदृशं प्रीतिसंयुक्तमितिमनुवचनस्थसदृशपदस्य सजातीयार्थकतैव युक्तेति प्रतिपादनम् | ८ | १ |
| दौहित्रभागिनेयौ ब्राह्मणादित्रिभिर्न ग्राह्यौ किंतु शूद्रेण ग्राह्यौ | ८ | ७ |
| क्षत्रियाणां पुरोहितगोत्रेण गोत्रित्वम् | ९ | १ |
| जातिष्वेव न चान्यत इति नियमस्य तात्पर्यकथनम् | ९ | ३ |
| सपिण्डेष्वपि सति संभवे भ्रातृसुत एव प्रथमं ग्राह्य इति कथनम् | १० | १ |
| अस्मिन्नर्थे प्रमाणभूतस्य मनुबृहस्पतिवचनद्वयस्य तात्पर्यार्थकथनम् | १० | ७ |
| विधिनाऽपरिगृहीतस्यापि भ्रातृपुत्रस्यापुत्रपितृव्यपुत्रत्वमस्त्वित्याशङ्काप्रतिपादनम् | १० | ८ |
| उपर्युक्ताशङ्काया निरसनम् | ११ | ७ |
| प्रकारान्तरेण निरुक्ताशङ्कायाः परिहारः | १२ | १ |
| भ्रातृपुत्रे सत्यपि यथा दत्तकादिरुपादीयते तद्वत्सपत्नीपुत्रसत्त्वेऽपि सपत्न्यन्तरस्य दत्तकाद्युपादानमस्त्वितिशङ्काप्रतिपादनम् | १२ | ८ |

| वि. | पृ. | प. |
|---|---|---|
| श्रौतस्मार्तदृष्टान्तकथनेन सपत्नीपुत्रसत्त्वे न. सपत्न्यन्तरस्य दत्तकग्रहणाधिकार इति कथनम् | १३ | ३ |
| सपत्नीपुत्रभ्रातृपुत्रयोर्विशेषकथनम् | १५ | ४ |
| एकस्मिन्नेव भ्रातृपुत्रे सति तस्य पुत्रीकरणासंभवमाशङ्क्य तत्परिहाराभिधानम् | १५ | ६ |
| तत्रैव पौराणिकलिङ्गकथनम् | १६ | २ |
| पुत्रदाने कीदृशोऽधिकारीति कथनम् | १६ | ७ |
| शौनकवचनघटकबहुपुत्रेणेति पदस्य प्रयोजनाभिधानम् | १७ | १ |
| स्त्रियाः पत्यनुज्ञया पुत्रदानग्रहणयोरधिकारोऽस्ति पत्यभावे तदनुज्ञां विनाऽपीति कथनम् | १८ | १ |
| याज्ञवल्क्यमतेन मातापित्रोः परस्परनिरपेक्षः पुत्रदानाधिकार इति प्रतिपादनम् | १८ | ४ |
| शौनकोक्तपुत्रपरिग्रहविधिकथनम् | १९ | ३ |
| वसिष्ठोक्तः पुत्रपरिग्रहविधिः | २० | ९ |
| बौधायनोक्तः पुत्रपरिग्रहविधिः | २३ | ३ |
| दत्तकस्य जनकगोत्रपिण्डरिक्थैः सह संबन्धो निवर्तत इति कथनम् | २३ | १७ |
| जनकेनाकृता एव दत्तकस्य संस्काराः प्रतिग्रहीत्रा करणीया इत्यभिधानम् | २४ | २ |
| जनकगोत्रेण कृताः संस्कारास्तु नैव निवर्तन्त इति कथनम् | २४ | ३ |
| जनकपितृकृतसंस्कारनिवर्तनेऽतिप्रसङ्गाभिधानम् | २५ | १ |
| जनकपितृकृतसंस्काराणां पुनरनुष्ठाने प्रतिग्रहीतुरधिकार एव नाऽऽयातीति कथनम् | २६ | २ |
| प्रतिग्रहीत्रोपनयनमात्रकरणेऽपि गृहीते दत्तकपुत्रत्वं सिध्यतीति कथनम् | २८ | १ |
| गर्भाष्टमादिमुख्योपनयनकालातिक्रमेण गृहीते दत्तकपुत्रत्वं न सिध्यतीति कथनम् | २९ | २ |
| प्रकरणसिद्धार्थसंग्रहः | ३१ | १५ |
| व्यामुष्यायणस्य गोत्रद्वयभागित्व उपनयनमात्रेण पुत्रत्वसिद्धौ च पुराणाधारेणायुक्तत्वोद्भावनम् | ३१ | २४ |
| निरुक्तपुराणस्य समूलत्वं गृहीत्वा कैश्चित्कृतं तद्विवरणमनूद्य तदयुक्तत्वकथनम् | ३४ | १ |
| पूर्वोक्तपुराणस्थवचनानामितराविरोधेनार्थवर्णनम् | ३४ | ६ |
| पुराणस्थवचनानां प्रकारान्तरेणार्थवर्णनम् | ३५ | ४ |
| चूडायाः संस्कारा इति चूडायपदस्योपनयनार्थकत्ववर्णनम् | ३६ | १ |
| ग्रहणे पञ्चमाद्वर्षादिति वचनं विशेषफलेच्छुविप्रविषयकमिति कथनम् | ३७ | ३ |
| चूडायां गौणकालादरस्तु वचनबलादेवेति मूलस्य विस्तृतमर्थवर्णनम् | ३९ | १० |
| द्व्यामुष्यायणस्वरूपकथनम् | ४१ | ५ |
| दत्तकस्य व्यामुष्यायणत्वं नैव संभवतीति प्रतिपादनम् | ४२ | ५ |
| दत्तकस्य व्यामुष्यायणत्वोपपादनम् | ४३ | १ |

| वि. | पृ. | प. |
|---|---|---|
| दत्तकस्य द्व्यामुष्यायणत्वे सत्याषाढसूत्रं प्रमाणम् | ४४ | ५ |
| निरुक्तसत्याषाढसूत्रस्य शाबरभाष्यकृतं व्याख्यानम् | ४४ | ७ |
| प्रकृतग्रन्थकारकृतं शाबरभाष्यार्थवर्णनम् | ४५ | २ |
| दत्तकस्य द्व्यामुष्यायणत्वे पैठीनसिसंमतिः | ४६ | १ |
| दत्तकस्य द्व्यामुष्यायणत्व आक्षेपस्तन्निरासश्च | ४७ | २ |
| दत्तककर्तृकश्राद्धानां निर्णयकथनम् | ४७ | १० |
| दत्तककर्तृके पितुः क्षयाहश्राद्धे विशेषकथनम् | ४९ | २ |
| द्व्यामुष्यायणेन जनकपालकयोः पित्रोः कर्तव्यश्राद्धविषये कश्चिद्विशेषः | ५४ | ८ |
| उभयोः पित्रोर्युगपच्छ्राद्धप्रसक्तौ द्व्यामुष्यायणेन, प्रथमं जनकाय पश्चाद्ग्रहीत्रे श्राद्धं देयम् | ५९ | १ |
| तथा जनकमातामहादिभ्यः पूर्वं श्राद्धं दत्त्वा पश्चात्पालकमातामहादिभ्यो देयम् | ६१ | २ |
| शुद्धदत्तकेन प्रतिग्रहीतृपित्रादिभ्य इव प्रतिग्रहीतृमातामहादिभ्य एव श्राद्धं देयम् | ६१ | ४ |
| दत्तकसापिण्ड्यनिर्णयकथनम् | ६१ | ८ |
| कार्ष्णाजिनिवचनार्थवर्णनम् | ६२ | ५ |
| प्रतिग्रहीत्रादिपितॄणामौरसत्व उदाहरणम् | ६२ | १७ |
| प्रतिग्रहीतुः शुद्धदत्तकत्व उदा० | ६२ | २२ |
| परिग्रहीतुर्द्व्यामुष्यायणत्व उ० | ६२ | २७ |
| दत्तकपुत्रकर्तृकसपिण्डनप्रकारस्तदुदाहरणं च | ६३ | १८ |
| द्व्यामुष्यायणपुत्रकर्तृकद्व्यामुष्यायणसपिण्डनप्रकारस्तदुदाहरणं च | ६३ | २६ |
| दत्तकपौत्रकर्तृको दत्तकपुत्रसपिण्डनप्रकारस्तदुदाहरणं च | ६४ | ३ |
| द्व्यामुष्यायणपौत्रकर्तृको द्व्यामुष्यायणपुत्रसपिण्डनप्रकारस्तदुदाहरणं च | ६४ | ९ |
| द्व्यामुष्यायणपितृकेण द्व्यामुष्यायणपौत्रेण दत्तकेन कर्तव्यः सपिण्डनप्रकारस्तदुदाहरणं च | ६४ | १९ |
| दत्तकपौत्रकर्तृको दत्तकपौत्रसपिण्डनप्रकारस्तत्सापिण्ड्यविच्छेदश्चेति कथनम् | ६४ | २३ |
| मत्स्यपुराणोक्तस्य साप्तपौरुषसापिण्ड्यस्य कार्ष्णाजिन्युक्तेन त्रिपुरुषसापिण्ड्येन बाध इति कथनम् | ६५ | ९ |
| जनकपालकोभयकुले त्रिपुरुषसापिण्ड्ये द्व्यामुष्यायणविषयकत्वमिति कथनम् | ६६ | २ |
| भिन्नगोत्रीयदत्तकस्य पालककुले सापिण्ड्यनिषेधकस्य वृद्धगौतमवचनस्य व्यवस्थापनम् | ६६ | ७ |
| दत्तकाशौचनिर्णयाभिधानम् | ६८ | २ |
| द्व्यामुष्यायणस्य तत्पुत्रपौत्राणां च जननमरणयोरुभयकुले त्र्यहाशौचकथनम् | ७१ | १ |
| सगोत्रस्यापि दत्तकस्य पालककुले त्रिपुरुषसापिण्ड्याभिधानस्य युक्तत्वकथनम् | ७३ | १ |
| अत्रेदं बोध्यमिति शास्त्रार्थवर्णनम् | ७५ | ६ |

| वि. | पृ. | प. |
|---|---|---|
| दत्तकस्य परिविस्थ्यादिदोषो नास्तीति कथनम् | ७६ | १ |
| दत्तकस्य जनककुले विवाहातिप्रसङ्गकथनम् | ७७ | १ |
| निरुक्तातिप्रसङ्गस्य निराकरणम् | ७७ | ४ |
| दत्तकमीमांसादत्तकचन्द्रिकाकारयोरभिप्रेतसापिण्ड्यस्य पिण्डीकृत्य कथनम् | ७७ | २२ |
| असपिण्डा च या मातुरिति मनुवचनस्यार्थः | ७७ | २९ |
| बालबोधार्थमुदाहरणोपन्यासः | ७९ | १३ |
| विवाहविषये दत्तकसापिण्ड्यं साप्तपौरुषमेवेति कथनम् | ७९ | २३ |
| दत्तकस्य दायविभागकथनम् | ८० | १ |
| यमस्मृत्युक्ता द्वादश पुत्राः | ८० | ७ |
| अदायादबान्धवशब्दस्य विग्रहप्रदर्शनम् | ८१ | १७ |
| नारदोक्ता द्वादश पुत्राः | ८१ | ३१ |
| विष्णूक्तो द्वादशपुत्रक्रमः | ८२ | ९ |
| याज्ञवल्क्योक्तो द्वादशपुत्रक्रमः | ८२ | १२ |
| षड्बन्धुदायादानां षडबन्धुदायादानां च स्वरूपतः परिगणनम् | ८३ | ६ |
| मनूक्तो द्वादशविधपुत्रक्रमः | ८३ | ९ |
| बन्धुदायादाबन्धुदायादशब्दार्थनिर्वचनम् | ८३ | २८ |
| द्वादशपुत्राणां मध्ये केषांचिद्धनहारित्वं केषांचिन्नेति बौधायनमतस्य व्यवस्थापनम् | ८४ | ५ |
| यमनारदहारीतमनुप्रभृत्यृषिवचनानामापाततो विरुद्धानां विरोधपरिहारेणैकवाक्यतयाऽर्थप्रतिपादनम् | ८६ | १ |
| क्षेत्रजदत्तकादीनां राज्यानधिकारित्वाभिधायकवचनानां शास्त्रमर्यादयाऽर्थवर्णनम् | ९१ | १ |
| औरसेन सहोक्तः क्षेत्रजदत्तकादीनां यो विभागप्रकारः स शूद्रस्य नास्ति । किंतु समांशविभाग इति कथनम् | ९५ | २ |
| दण्डापूपन्यायस्वरूपम् | ९६ | २१ |
| द्व्यामुष्यायणदत्तकस्य धनहर्तृत्वप्रकारः | ९९ | ४ |
| अन्धपङ्ग्वादिपुत्राणामनंशित्वकथनपूर्वकं तद्गृहीतदत्तकादेर्न धनाधिकारः किंतु भरणमात्रमिति कथनम् | १०० | ३ |
| अन्धादिपुत्राणामौरसा क्षेत्रजाश्च भागहारिणो भवन्तीति कथनम् | १०१ | ३ |
| अन्धादिपुत्रभार्याणां भर्तव्यत्वकथनम् | १०१ | ४ |
| औरसे सति गृहीतस्यांशभागित्वाभावस्तत्र युक्तिकथनं च | १०१ | १२ |
| शौनकाद्युक्तविधानमन्तरेण गृहीतस्य नांशभागित्वम् | १०१ | १८ |
| अन्यजातीयदत्तकस्यापि नांशभागित्वमिति कथनम् | १०२ | ३ |
| ग्रन्थसमाप्तौ प्रकृतग्रन्थस्य संक्षेपतः कर्तव्यप्रदर्शनम् | १०३ | ३ |


समाप्तेयं दत्तकचन्द्रिकाया विषयानुक्रमणिका ॥

ॐ तत्सद्ब्रह्मणे नमः ।

शांकरीव्याख्यासंवलिता श्रीकुबेरभट्टप्रणीता

# दत्तकचन्द्रिका ।

## ( प्रथमं प्रकरणम् ) ।

चन्द्रिकानुक्तसंजातसंशयध्वान्तचन्द्रिका ।
चन्द्रिकालानुभावेन कृता दत्तकचन्द्रिका ॥ १ ॥

मन्वादिवाक्यविवृतेषु विवादमार्गे-
ष्वष्टादशस्वपि मया स्मृतिचन्द्रिकायाम् ।
कल्युक्तदत्तकविधिर्न विवेचितो यः
सर्वः स चात्र वितनो विवृतो विशेषात् ॥ २ ॥

## ( शांकरीव्याख्या )

### ( प्रथमं प्रकरणम् ) ।

ग्रन्थादौ निर्विघ्नतत्समाप्तिकामः कुबेरनामा सर्वीमहाकालापरपर्यायिशिवस्मरणरूपं मङ्गलं कुर्वश्चिकीर्षितं ग्रन्थं प्रतिजानीते—चन्द्रिकानुक्तेत्यादि । चन्द्रिकायां स्मृतिचन्द्रिकायां दत्तकसंबन्धिनो गूढतमस्य तत्सदर्थस्यानुक्तत्वेन हेतुनोत्पन्नो यः संशयध्वान्तस्तस्य चन्द्रिकेव चन्द्रिका संशयादिनिवारणेनार्थप्रकाशकत्वादित्यर्थः । यथैव हि चन्द्रिकाऽन्धकारापसारणेन तत्र लीनं घटाद्यर्थं प्रकाशयति तद्वत् । चन्द्र-श्चन्द्रकलाऽस्ति यस्मिन् स चन्द्री । मत्वर्थीय इन्प्रत्ययः । शशिखण्डमण्डन इत्यर्थः । स चासौ कालश्च कालाख्यः शिवः । महाकाल इति यावत् । तस्य प्रभावेण कृपाकटाक्षसामर्थ्येन दत्तकचन्द्रिकेत्यन्वर्थनामा निबन्धः कृतः । मया कुबेरेणेति शेषः । यथाऽन्धतमसलीना घटादयः पदार्थाश्चन्द्रप्रभया प्रकाश्यन्ते तद्वद्दत्तकसंब-न्धिपदार्था अनया दत्तकचन्द्रिकयैव प्रकटी क्रियन्त इति यावत् । अत्र चन्द्रिकाले-त्यनेन महाकालाख्यचन्द्रचूडदेवतास्मरणरूपं मङ्गलमाचरितमिति बोध्यम् ॥ १ ॥

मन्वादिवाक्येति । तेषामाद्यमृणादानम्० ( म० स्मृ० अ० ८ श्लो० ४—७ ) इत्येवमादिभिर्मनुप्रभृतीनां वचनैर्व्याख्यातेष्वष्टादशस्वपि विवादस्थानेषु यो विस्तृतोऽस्ति यश्च स्मृतिचन्द्रिकायां न विशिष्य विवेचितः सोऽयं कलावुक्तो दत्तकविधिर्मयाऽत्र ग्रन्थे विवृतः । विशदीकर्तुमारब्ध इत्यर्थः । विशेषात् । ऋष्युक्तवचनानां तात्प-र्यनिर्णायकमीमांसात्मकविचारविशेषादिति भावः ॥ २ ॥

तत्राऽऽह मनुः—अपुत्रेण सुतः कार्यो यादृक् तादृक् प्रयत्नतः ।
पिण्डोदकक्रियाहेतोर्नामसंकीर्तनाय च ॥
अत्रिश्च—अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदा ।
पिण्डोदकक्रियाहेतोर्यस्मात्तस्मात्प्रयत्नतः ॥
अपुत्रेण अजातपुत्रेण मृतपुत्रेण वा ।
अपुत्रो मृतपुत्रो वा पुत्रार्थं समुपोष्य च ॥
इति शौनकसंवादात् । तेन पुत्रोत्पत्त्या—
ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः ।
पितॄणामनृणश्चैव स तस्माल्लब्धुमर्हति ॥

अपुत्रेण सुतः कार्य इति । पिण्डः श्राद्धम् । उदकमञ्जलिदानादि । क्रिया, और्ध्वदेहिका दाहादिः । वंशनामप्रवृत्तिश्चेत्येतदर्थमपुत्रेण पुरुषेण येन केनापि प्रयत्नेन पुत्रप्रतिनिधिः । कृत्रिमः पुत्र इति यावत् । कार्यः संपादनीय इत्यर्थः । प्रयत्नत इति पञ्चम्यन्तात्तसिः । तत्समानाधिकरणविशेषणत्वाद्यादृक्तादृगिति च पञ्चम्यन्तमव्ययम् । 'यादृक् तादृक् प्रयत्नतः' इत्यस्यात्रिवचनस्थेन 'यस्मात्तस्मात्प्रयत्नतः' इत्यनेन समानार्थकत्वाच्च । येन केनापि प्रयत्नेनेत्यर्थः । यः कश्चन प्रयत्नश्च शास्त्रानुगृहीत एव ग्राह्यः । न तु शास्त्राननुगृहीतः । शास्त्राननुगृहीते प्रयत्ने सति तत्र प्रमाणाभावेन स्वगोत्रपुत्रत्वाद्यनुत्पादप्रसङ्गात् । शास्त्रानुगृहीतप्रयत्नाश्च—क्षेत्रजादीन्सुतानेतानेकादश यथोदितान् । पुत्रप्रतिनिधीनाहुः० ( म० स्मृ० ९ । १८० ) इति मन्वादिभिरुक्ता एकादशैवेति बोध्यम् । एतत्समानार्थकमत्रिवचनमपि प्रदर्शयति—अपुत्रेणैव कर्तव्य इति । अस्यार्थो मत्कृतायां दत्तकमीमांसाटीकायां मञ्जर्यां द्रष्टव्यः । अपुत्रेण सुतः कार्य इति मनुवचनेऽपुत्रेणेत्यस्यानुत्पन्नपुत्रेण मृतपुत्रेण वेत्यर्थो बोध्यः । अपुत्रो मृतपुत्रो वेति शौनकवाक्यैकवाक्यत्वात् । तेनेति । अजातपुत्रेण मृतपुत्रेणापि वा दत्तको ग्राह्य इत्यर्थस्यर्षिसंमतत्वेनेत्यर्थः । औरसपुत्रोत्पत्तौ सत्यां 'ज्येष्ठेन जातमात्रेण०' इति ( म० स्मृ० ९ । १०६ ) उत्पन्नमात्रेण ज्येष्ठेन संस्काररहितेनापि मनुष्यः पुत्रवान्भवति । ततश्च 'नापुत्रस्य लोकोऽस्ति' इति श्रुत्युक्ताया अपुत्रतानिमित्तिकाया अलोकतायाः परिहारो भवति । तथा 'प्रजया पितृभ्यः' इति श्रुतेर्जातमात्रेण पुत्रेण पितॄणामनृणः पितृऋणरहितश्च स भवति । अतो ज्येष्ठ एव सर्वधनमर्हति । पैत्रर्णापाकरणादिपुत्रकार्यकरणे तस्यैव मुख्यत्वात् । इत्यर्थकनिरुक्तमनुवचनानुसारेणालोकतापित्र्यर्णयोः परिहारेऽपि तत्पुत्रस्य मरणे पिण्डोदकार्थं पुनः पुत्रप्रतिनिधीकरणमावश्यकं भवति ।

इति मनुवचनावगतऋणपरिहारेऽपि तत्पुत्रमरणे पिण्डोदकाद्यर्थं पुनः पुत्रकरणमावश्यकम् ।

अत्र पुत्रपदं पौत्रप्रपौत्रयोरप्युपलक्षणम् । तयोरपि पिण्डदातृत्ववंशकरत्वाविशेषात् । अन्यथा सत्यपि पौत्रे मृतपुत्रस्य निर्निमित्तपुत्रपरिग्रहापत्तिः । अतः पुत्रपौत्रप्रपौत्ररहितस्यैव पुत्रीकरणमवगम्यते ।

अपुत्रेणेत्यत्र पुंस्त्वैकत्वयोर्विधेयविशेषणतयाऽविवक्षितत्वम् । तेन द्वाभ्यां त्रिभिर्वा नैकः प्रतिग्राह्य इति तु न देश्यम् । द्व्यामुष्यायणस्य द्वाभ्यां परि-

---

अत्र पिण्डोदकाद्यर्थमित्युक्त्या मृतपुत्रस्य पुरुषस्यालोकतापित्र्यर्णपरिहारो मृतपुत्रेणैव निर्वृत्तो भवति । जातमात्रेणेति मात्रपदं निवेशयता मनुना जन्मानन्तरं तन्मरणेऽपि केवलं जन्मनैवर्णपरिहारस्य सूचनादित्याशयः । अजातपुत्रस्य तु पिण्डोदकाद्यर्थमलोकतादिपरिहारार्थं चेत्युभयार्थं पुत्रीकरणमावश्यकमिति बोध्यम् । **पुत्रपदमिति** । अपुत्रेणेति बहुव्रीहिघटकं पुत्रपदमित्यर्थः । **उपलक्षणमिति** । पुत्रपदेन पौत्रप्रपौत्रयोरपि ग्रहणं कर्तव्यम् । तत्रैव हेतुमाह—**तयोरपीति** । यथा पुत्रस्य पिण्डदातृत्वं वंशकरत्वं च प्रसिद्धं तद्वत्पौत्रप्रपौत्रयोरपि तत्सत्त्वादित्यर्थः । तत्र ‘ पुत्रः पौत्रः प्रपौत्रो वा तद्वद्वा भ्रातृसंततिः ’ इति विष्णुपुराणे पराशरेण पौत्रप्रपौत्रयोः पिण्डदानाधिकारोऽभिहितः । तथा ‘ लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः ’ ( या० स्मृ० १ । ७८ ) इति श्लोके मिताक्षरायां पुत्रपौत्रप्रपौत्रकैर्लोक आनन्त्यं वंशस्याविच्छेदोऽग्निहोत्रादिभिश्च दिवः प्राप्तिरिति वर्णनात्पौत्रप्रपौत्रयोर्वंशकरत्वं चाभिहितमिति विवेकः । **अन्यथा**—पुत्रपदेन पौत्रप्रपौत्रयोरग्रहणे । पौत्रे जीवति सति मृतपुत्रस्य निष्कारणं पुत्रपरिग्रहः कर्तव्यः स्यात् । पुत्रपरिग्रहे निमित्तं तु पिण्डोदकदानादि । पिण्डोदकक्रियाहेतोरित्युक्तेः । पौत्रादौ सति तादृशनिमित्तस्य पिण्डोदकदानाद्यधिकारित्वस्य पुत्र इव पौत्रादावपि सत्त्वेन मृतपुत्रस्य निर्निमित्तः पुत्रग्रह आपद्येतेत्यर्थः । तस्मात्पुत्रपौत्रप्रपौत्ररहितस्यैव पुत्रपरिग्रहाधिकारोऽवगम्यते ।

ननु ‘ अपुत्रेण सुतः कार्यः ’ इति वचनेन किमपुत्रं कर्तारमुद्दिश्य सुतः कर्तव्य इति पुत्रीकरणं विधीयतेऽथवा पुत्रीकरणमुद्दिश्य तत्कर्तृत्वेनापुत्रो विधीयते ? । नाऽऽद्यः । अपुत्रस्य कर्तुरप्राप्तत्वात् । नान्त्यः । सुतकर्तव्यताया अप्राप्तत्वात् । अतोऽनेनैवोभयं विधातव्यम् । ततश्चापुत्रकर्तृकपुत्रीकरणे विधेये सति तद्घटकस्यापुत्रस्यापि विधेयतावश्यंभावात्पशुना यजेतेत्यत्र विधेयपशुगतपुंस्त्वैकत्वयोर्विवक्षितत्वेन पुंसैकेन च पशुना यागकर्तव्यतावत्पुंसैकेन चापुत्रेण सुतः कार्य इत्यर्थपर्यवसानाद्द्वयोरपुत्रयोरेकस्य पुत्रीकरणं स्त्रियाश्चापुत्रायाः पुत्रीकरणं च न प्राप्नोतीत्याशङ्क्य परिहरति—**न देश्यमिति** । न शङ्क्यमित्यर्थः । शङ्काभावे कारणमाह—**द्वाभ्यामिति** ।

थङ्गस्य वक्ष्यमाणत्वात् । स्त्रियाश्च भर्तुरनुज्ञया तदधिकारात् । यथाऽऽह वसिष्ठः-

न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुरिति ।

प्रतिनिधिरिति । स च क्षेत्रजादिरेकादशविधः ।

यथा मनुः—क्षेत्रजादीन् सुतानेतानेकादश यथोदितान् ।

पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥

बृहस्पतिः—पुत्रास्त्रयोदश प्रोक्ता मनुना येऽनुपूर्वशः ।

संतानकारणं तेषामौरसः पुत्रिका तथा ॥

आज्यं विना यथा तैलं सद्भिः प्रतिनिधीकृतम् ।

तथैकादश पुत्रास्तु पुत्रिकौरसयोर्विना ॥ इति ।

तत्रापि कलौ न सर्वेषामभ्यनुज्ञानम्—

अनेकधा कृताः पुत्रा ऋषिभिर्ये पुरातनैः ।

न शक्यन्तेऽधुना कर्तुं शक्तिहीनैरिदंतनैः ॥

---

द्वाभ्यां प्रतिग्रहीतृभ्यामेकस्य पुत्रस्य परिग्रहकर्तव्यतायाः 'क्रियाभ्युपगमात्त्वेतत्' ( म० स्मृ० ९ । ५३ ) 'अपुत्रेण परक्षेत्रे' ( या० स्मृ० २ । १२७ ) इत्यादिनाऽग्रे वक्ष्यते । अयमेव द्व्यामुष्यायणो द्विपितेति चोच्यते । तथा स्त्रियाश्च पत्यनुज्ञया पुत्रपरिग्रहाधिकारो वसिष्ठेन प्रतिपादितः--अन्यत्रानुज्ञानाद्भर्तुरिति । तस्माद्द्वाभ्यां त्रिभिर्वा नैकः परिग्राह्यः स्त्रीणां च नास्ति पुत्रीकरणाधिकार इत्येवं सामान्यरूपेण शङ्काऽपि न कार्येत्यर्थः । निरुक्तमन्वादिवचनप्रामाण्याद्विधेयविशेषणमप्येकत्वं पुंस्त्वं चाविवक्षितमिति भावः । अथवा जनकप्रतिग्रहीतृरूपद्वाभ्यामेकस्य परिग्रहो वाचनिक एवाङ्गीकार्यः । ततश्च जनकाघटितपरिग्रहीतृद्वयकर्तृक एकस्य परिग्रहे 'द्वाभ्यां नैकः परिग्राह्यः' इति निषेधः प्रवर्तत एव । भर्त्रनुज्ञानरहितायाः स्त्रियाश्च न परिग्रहाधिकारः । निरुक्तोभयस्थले प्रसक्तनिषेधबाधे प्रमाणाभावादित्याशयः ।

**प्रतिनिधिरितीति** । अपुत्रेणैव कर्तव्य इत्यत्रिवचनस्थमिदं प्रतीकम् । स च प्रतिनिधिरेकादशधेति 'क्षेत्रजादीन्सुतान्' इत्यादिना मनुराह । **त्रयोदशेति** । औरसादिपारशवान्ता द्वादश पुत्राः । त्रयोदशस्तु पुत्रिकारूप इति बोध्यम् । एते च मनुस्मृत्यादौ प्रसिद्धाः । **संतानकारणमिति** । वंशप्रवर्तकत्वमित्यर्थः । यद्यपि संतानकारणत्वं त्रयोदशस्वपि समानं तथाऽपि पुत्रिकौरसयोस्तन्मुख्यं क्षेत्रजादिषु तु गौणमित्याशयेनाऽऽह—**आज्यं विनेति** । यद्यप्येकादश पुत्रप्रतिनिधयः शास्त्रे प्रतिपादितास्तथाऽपि तेषां सर्वेषां समादरः कलियुगे नास्ति । 'अनेकधा कृताः पुत्राः' इति बृहस्पतिना निषेधात् । निषेधे कारणमाह—**शक्तिहीनैरिति** । निन्द्य-

इति वचनात् । “ दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः” इत्यभिधाय “ इमान्ध-र्मान्कलियुगे वर्ज्यानाहुर्मनीषिणः ” इति दत्तकेतरप्रतिनिधिनिषेधात् । अतो दत्तकविधिर्विविच्यते । तत्र शौनकः—

ब्राह्मणानां सपिण्डेषु कर्तव्यः पुत्रसंग्रहः ।

तदभावेऽसपिण्डे वा अन्यत्र तु न कारयेत् ॥

सपिण्डेष्विति सामान्यश्रवणात्समानासमानगोत्रेष्वित्यर्थः । तथा च सपिण्डा-भावेऽसपिण्डः सगोत्रस्तदभावे भिन्नगोत्रोऽपि ग्राह्य इत्याह शाकलः—

सपिण्डापत्यकं चैव सगोत्रजमथापि वा ।

---

मार्गेणोत्पन्नानामत एव चापवित्राणां गूढजकानीनक्षेत्रजादिपुत्राणां पवित्रीकरणसमर्थ-यमनियमाद्धितपःप्रभावजन्यब्राह्मादितेजोविशेषेण विरहितत्वात्प्रायेण कलियुगे द्विजादीनां विशुद्धाचरणपवित्रसंस्कृत्यादिप्रभवालौकिकशक्तेरभावः । अत एव कलौ द्विजादीनां वरः शापो वा किंचिद्विषयकोऽशतोऽपि न सत्यतया नियतं पर्यवस्यति । तस्मादपवित्राः पुत्रा इदानींतनैर्नग्नैः कर्तुं शक्याः । इदानींतनेषु तपःसामर्थ्यज-न्यविशिष्टशक्तेरभावादिति भावः । पुरातनेषु तु तादृशी शक्तिरासीदिति तैरेव तादृशाः पुत्राः कर्तुं शक्या इति यावत् । तथा ‘ दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः । सवर्णान्याङ्गनादुष्टैः संसर्गः शोधितैरपि ’ इत्यादिकं बहुविधमुक्त्वा ‘ इमान् धर्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः ’ इत्यनेन दत्तकेतरपुत्रप्रतिनिधेर्निषिद्धत्वात्क्षेत्रजादिवि-धिविवेचनं परित्यज्य दत्तकविधिरेव विविच्यते—याथातथ्येन तत्स्वरूपं प्रदर्श्यते ।

**ब्राह्मणानां सपिण्डेष्विति** । ब्राह्मणैः स्वसपिण्डेषु पितृतः सप्तमपुरुषावधि-केषु मातृतः पञ्चमपुरुषावधिकेषु च दत्तकपुत्रः कर्तव्यः । सगोत्रत्वासगोत्रत्वादिकिं-चिद्विशेषणमनुपादाय ‘ सपिण्डेषु ’ इत्येव सामान्यत उक्तेरुभयविधेषु समानगो-त्रसपिण्डेष्वसमानगोत्रसपिण्डेषु चेत्यर्थो बोध्यः । ततश्च समानगोत्रासमानगोत्र-सपिण्डालाभेऽसपिण्डः सगोत्रश्चतुर्दशपुरुषावधिकः । तस्याप्यभावे समानोदक एकविंशपुरुषावधिको ग्राह्य इत्यर्थः । तस्याप्यभावे भिन्नगोत्रोऽपि ग्राह्य इत्यर्थे शाकलं प्रमाणयति—**सपिण्डापत्यकमित्यादि** । स्वगोत्रजस्याभावे भिन्नगोत्रजं पुत्रं पालयेत् । किंतु भिन्नगोत्रजानां मध्ये दुहितुः पुत्रं भगिन्याः पुत्रं मातृभगिन्याः पुत्रं चेति भिन्नगोत्रीयं पुत्रत्रयं न परिगृह्णीयादित्यर्थः । **अन्यत्र तु नेति** । ब्राह्मणव्यतिरिक्तः क्षत्रियादिभिन्नजातीयः पुत्रो ब्राह्मणेन नैव दत्तकः कर्तव्य इत्य-नेन प्रतिपाद्यत इत्यर्थः ।

समानजातीयमित्यर्थकं सदृशपदं निवेशयता मनुनाऽपि भिन्नजातीयो दत्तको

अपुत्रको द्विजो यस्मात्पुत्रत्वे परिकल्पयेत् ॥
समानगोत्रजाभावे पालयेदन्यगोत्रजम् ।
दौहित्रं भागिनेयं च मातृष्वसृसुतं विना ॥ इति ।

अन्यत्र तु न कारयेदिति श्लोकगालिरिक्तः क्षत्रियादिरसमानजातीयो दत्तको व्यावर्त्यते । यदाह मनुः—

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ।
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुतः ॥

आपदि पुत्रग्रहीतुरपुत्रत्वे । सदृशं सजातीयम् ।

यत्तु सदृशं न जातितः किंतु कुलानुरूपैर्गुणैस्तेन क्षत्रियादिरपि ब्राह्मणस्य पुत्रो युज्यत इति मेधातिथिव्याख्यानम् । तत्रायमभिसंधिः—

औरसासत्त्वे क्षत्रियादेरसमानजातीयतया पिण्डोदकाद्यनर्हत्वेऽपि नामसंकीर्त-

---

न ग्राह्य इत्यर्थः सूचित इत्याह—माता पिता वेति ( म० स्मृ० ९ । १६८ ) । ‘ शुक्रशोणितसंभवः पुरुषो मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतः ’ इति वसिष्ठोक्तेर्माता पिता वा परस्परानुज्ञया यं पुत्रं सदृशं परिग्रहीतुः समानजातीयं तस्यैव पुत्राभावनिमित्तायामापदि प्रीतियुक्तं नतु भयादिना, उदकपूर्वं दद्यात्स दत्त्रिमाख्यः पुत्रो विज्ञेय इति तदर्थः कुल्लूकभट्टेनोक्तः । तथा चाऽऽपदीत्यस्य प्रतिग्रहीतुरपुत्रत्व इति सदृशमित्यस्य च समानजातीयमित्यर्थः प्रतिपादितः । स चान्यत्र तु न कारयेदित्यनेनैकवाक्यत्वलाघवाद्युक्तिसिद्ध इत्यत्र प्रमाणत्वेन प्रदर्शितः । सदृशमित्यस्य मेधातिथिकृतं व्याख्यानं दर्शयति—**यत्त्विति** । सदृशमित्यस्य समानजातीयमिति नार्थः, किंतु विद्वत्त्वसच्छीलत्वादिसत्कुलोचितगुणैः सदृशमित्यर्थं मन्यते । तेन क्षत्रियादिरसमानजातीयोऽपि ब्राह्मणस्य दत्तकः पुत्रो भवितुमर्हतीति मेधातिथिराह । तदाशयं प्रदर्शयति—**तत्रायमिति** । अयं भावः । औरसे पुत्र उत्पन्ने सति यदि पूर्वं गृहीतः सजातीयो दत्तकः पुत्रः स्याच्चेत्स दत्तकस्तृतीयांशं लभेत न समग्रं समांशं वा । यदि तु स दत्तकपुत्रो विजातीयः क्षत्रियादिः स्यात्तदा स विजातीयो दत्तको ग्रासाच्छादनमात्रं लभते नान्यत्किंचिदिति कात्यायन आह । सत्येवं यदि विजातीयः सर्वथा दत्तकपुत्रो न भवेत्तर्हि तस्य ग्रासाच्छादनमात्रस्यापि दानविधानं कात्यायनोक्तमनुपपन्नं स्यात् । तस्माद्भिन्नजातीयोऽपि पुत्रो दत्तको भवतीति कात्यायनस्याऽऽशयो लक्ष्यते ।

नन्वेवं चेत्पुत्रत्वाविशेषाद्विजातीयस्यापि तृतीयांशहरत्वं युक्तमिति चेन्न । सवर्णानुद्दिश्य तृतीयांशहरत्वाभिधानात् । क्षत्रियादिस्तु न ब्राह्मणस्य सवर्णः । नन्विदं वर्णप्रयुक्तमंशवैष-

नादिप्रयोजनकतया पुत्रत्वमुत्पद्यत एव श्लाघीयत्वात्, परं स्वल्पोपकारतया ग्रासाच्छादनमात्रभागित्वम् । यदाह कात्यायनः—असवर्णास्तु ग्रासाच्छादनभागिन इति । तथा शौनकः—

यदि स्यादन्यजातीयो गृहीतोऽपि सुतः क्वचित् ।
अंशभाजं न तं कुर्याच्छौनकस्य मतं हि तत् ॥

याज्ञवल्क्योऽपि—सजातीयस्य पिण्डदातृत्वांशहरत्वे विहिते न तु विजातीयस्य पुत्रत्वं निषिद्धम् । व्यक्तमाह वृद्धयाज्ञवल्क्यः—

सजातीयः सुतो ग्राह्यः पिण्डदाता स रिक्थभाक् ।
तदभावे विजातीयो वंशमात्रकरः स्मृतः ॥
ग्रासाच्छादनमात्रं तु लभते स तदृक्थिनः । इति ।

---

म्यमनुपपन्नमिव भाति । पुत्रत्वाविशेषादिति चेद्भ्रान्तोऽसि । पितृद्रव्यप्राप्तौ न केवलं पुत्रत्वं कारणमपि तु पुत्रकृतः पित्रुपकारः कारणम् । तत्र सजातीयो दत्तकपुत्रः पिण्डोदकक्रियानामसंकीर्तनादिसमग्रपुत्रकार्यसंपादनेन पितरं बहूपकरोति । क्षत्रियादिस्तु विजातीयतया पिण्डोदकादिपुत्रकार्यसंपादनेऽनर्होऽपि 'नामसंकीर्तनाय च' इत्युक्तेः स्ववंशनामप्रसिद्धिरूपपुत्रकार्यसंपादनेन पितरमुपकुर्वन्नपि स्वल्पमुपकरोति । अतः स्वल्पोपकारकत्वाद्विजातीयस्य ग्रासाच्छादनभागित्वं सजातीयस्य बहूपकारकत्वात्तृतीयांशभागित्वमिति नात्र किंचिदनुपपन्नम् । विजातीयस्य पिण्डदानाद्यनर्हत्वं 'पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः । सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः' ( या० स्मृ० २ । १३२ ) इति वचनार्थपर्यालोचनेन स्पष्टमेवावगतं भवतीत्याशयेनाऽऽह—असवर्णास्तु ग्रासाच्छादनभागिन इति । उत्पन्ने त्वौरसे पुत्रे तृतीयांशहराः स्मृताः । सवर्णाः, इत्यस्याऽऽदिः । अन्यजातीयोऽपि दत्तकपुत्रो भवतीत्यत्र शौनकसंमतिं प्रदर्शयति—यदि स्यादन्यजातीय इति । 'पिण्डदोंऽशहरः... सजातीयेष्वयं प्रोक्तः०' इति निरुक्तयाज्ञवल्क्यवचनेनापि सजातीयस्य पिण्डदातृत्वांशहरत्वे अभिहिते नतु विजातीयस्य पुत्रत्वं निषिद्धम् । विजातीयसुतस्य ग्राह्यता वृद्धयाज्ञवल्क्येन स्पष्टमेवाभिधीयते—सजातीयः सुतो ग्राह्य इत्यादिना । पिण्डदातेति । पिण्डेति पिण्डोदकक्रियादिसकलपुत्रकार्योपलक्षणम् । तेन सकलप्रयोजनसाधकत्वेन बहूपकारकः । अत एव च स रिक्थभाग्भवतीत्यर्थः । विजातीय इति । ग्राह्य इति शेषः । वंशमात्रकर इति । मात्रपदेन पिण्डोदकक्रिया व्यावर्त्यन्ते । ततश्च स्वल्पोपकारकत्वेनास्य भागनिषेध इति गूढाभिसंधिनाऽऽह—ग्रासेति । यतोऽतीव स्वल्पोपकारकस्ततस्तस्य ग्रासाच्छादनदानमेव युक्तं नतु तद्रिक्थहरत्वमिति भावः ।

वस्तुतस्तु मनुवचने सदृशपदस्य सजातीयार्थकत्वेन युक्ता । परन्तु तादृशदत्तकस्य विभागदर्शनादसवर्णस्य च विभागाभावात् । दौहित्रो भागिनेयश्चेति दौहित्रभागिनेयनिषेधः शूद्रातिरिक्तविषयः । तथा च शौनकः—

क्षत्रियाणां सजातौ च गुरुगोत्रसमेऽपि वा ।
वैश्यानां वैश्यजातिषु शूद्राणां शूद्रजातिषु ॥
सर्वेषामेव वर्णानां जातिष्वेव न चान्यतः ॥
दौहित्रो भागिनेयश्च शूद्रैस्तु क्रियते सुतः ।
ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित् ।

मनुवचने सदृशमित्यस्य 'सजातीयम्' इत्यर्थ एवोचित इत्यन्वयव्यतिरेकाभ्यां स्पष्टयति— परस्मिन्निति । 'श्रेयसः श्रेयसोऽलाभे पापीयान्रिक्थमर्हति । बहवश्चेत्तु सदृशाः सर्वे रिक्थस्य भागिनः' ( म० स्मृ० ९ । १८४ ) इत्याकारके परस्मिन्मनुवचने सजातीयदत्तकस्य विभागप्रतिपादनादित्यर्थः । नन्वौरसादिद्वादश पुत्राननुक्रम्य तेषु पूर्वः पूर्वः श्रेयान् स एव दायहरः । पूर्वपूर्वाभाव उत्तरोत्तरस्य दायहरत्वाभिधानादौरसाद्यभावे दत्तको दायमर्हतीति सत्यं किल, परं स दत्तकः सजातीय एव दायहरो नासजातीय इति कुतो लभ्यत इति चेत् । उच्यते— 'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः' ( या० स्मृ० २ । १३३ ) इति याज्ञवल्क्येन सजातीयानामेव दायहरत्वाभिधानेन तदेकवाक्यतया मानवेऽपि सजातीयानामेव दायहरत्वाङ्गीकारात् । तथा चापरस्मिन् सजातीयदत्तकस्य धनहारित्वाभिधानाल्लिङ्गादुपक्रमे दत्तकलक्षणे सदृशपदस्य सजातीयार्थकतैव युक्तोपक्रमोपसंहारयोरैकरूप्याय । गुणैः सदृशमित्यर्थाङ्गीकारे तु दत्तकलक्षणे विजातीयस्यापि प्रवेशस्तादृशदत्तककर्तृकधनहारित्वे तु तस्याप्रवेश इति वैरूप्यं स्यात् । न च धनहारित्वाभिधायकेऽप्युपक्रमवाक्यसिद्धस्यैव दत्तकस्य ( सजातीयविजातीयस्य ) परामर्शेन विजातीयस्यापि धनहारित्वोपपत्तेर्न वैरूप्यमिति वाच्यम् । 'असवर्णास्तु ग्रासाच्छादनभागिनः' इति कात्यायनेन विजातीयस्य धनभागित्वप्रतिषेधात् । 'यदि स्यादन्यजातीयो गृहीतोऽपि सुतः क्वचित् । अंशभाजं न तं कुर्याच्छौनकस्य मतं हि तत्' । इति शौनकेनान्यजातीयस्य स्पष्टमेवांशभाक्त्वस्य प्रतिषेधाच्च । तस्माद्दत्तकलक्षणप्रतिपादके मनुवचने सदृशपदस्य सजातीय इत्यर्थ एवोचित इति ध्येयम् ।

दौहित्रभागिनेययोर्निषेधः प्रागुक्तस्तथा विजातीयस्य ग्रहणमप्येकीयमतेनोक्तम् । तत्र वचनान्तरविरोधमाशङ्क्य तत्परिहाराय तदर्थं वर्णयितुमादौ वचनं निर्दिशति— तथा च शौनक इति । क्षत्रियाणामित्यादि । क्षत्रियैः सजातौ स्वसमानजातीये

'गुरुगोत्रसमेऽपि वा' इति क्षत्रियाणां प्रातिस्विकगोत्राभावाद्गुरुगोत्रनिर्देशः। पौरोहित्यान्राजन्यविशां प्रवृणीतेति सूत्रेण तस्य पुरोहितगोत्रभागित्वोक्तेः। जातिष्वेव न चान्यत इति नियमः सजातीयसंभवे विजातीयनिषेधार्थः। अन्यथा प्रागुक्तकात्यायनविरोधः स्यात्। तत्रापि संनिहितसपिण्डेषु

दत्तकः कर्तव्यः। स च भिन्नगोत्रीयः। गुरुगोत्रसमे, इत्यग्रे वक्ष्यमाणत्वात्। अथवा गुरोः स्वपुरोहितस्य यद्गोत्रं तेन समे तुल्ये। अत्रापि सजातावित संबध्यते। तेन गुरुगोत्रतुल्ये स्वजातीय इत्यर्थः। समानगोत्रे क्षत्रियजातीये दत्तकः कर्तव्यः। क्षत्रियैः समानगोत्रोऽसमानगोत्रो वा स्वजातीयो दत्तकः परिग्राह्य इति भावः।

नन्वेवं चेद्गुरुपदं विहाय गोत्रसमे, इत्येव वक्तव्यम्। कस्य गोत्रेण समे इत्याकाङ्क्षायां प्रतिग्रहीतुः क्षत्रियस्य गोत्रेण समे तुल्य इत्यर्थात्तस्यसमानगोत्रे क्षत्रियजातीये क्षत्रियेण दत्तकः कर्तव्य इत्यर्थोपपत्तेर्गुरुपदं व्यर्थमित्याशङ्क्य क्षत्रियाणां पुरोहितगोत्रेणैव गोत्रवत्त्वान्मैवं वादीरित्याह—प्रातिस्विकगोत्राभावादिति। ब्राह्मणजातीयत्वे सत्यगस्त्याष्टमसप्तर्ष्यपत्यत्वं प्रातिस्विकगोत्रत्वम्। तच्च क्षत्रियाणां सर्वथा न संभवति। तेषां ब्राह्मणजातीयत्वाभावात्। किंतु 'पौरोहित्यान् राजन्यविशां प्रवृणीत' इत्याश्वलायनसूत्रेण तेषां पुरोहितगोत्रेण गोत्रवत्त्वप्रतिपादनाद्गुरुगोत्रेत्युक्तमिति भावः। शूद्रैस्त्विति। ततश्च पूर्वं यः सामान्यत उक्तो दौहित्रभागिनेयनिषेधः स शूद्रातिरिक्ते ब्राह्मणादित्रये बोध्यः। तदाह—ब्राह्मणादित्रये नास्तीति। भागिनेयेत्युपलक्षणं दौहित्रस्यापि। 'शूद्रैस्तु क्रियते सुतः' इति तयोः शूद्रविषयत्वस्योक्तत्वात्। जातिष्वेव न चान्यत इतीति। सर्वैर्वर्णैः स्वस्वजातावेव पुत्रसंग्रहः कर्तव्यो न भिन्नजातावित्येवं योऽयं नियमः स सजातीयपुत्रलाभसंभवे सति विजातीयपुत्रग्रहणनिषेधार्थः। नतु सर्वथा विजातीयसुतनिषेधार्थः। अन्यथा 'असवर्णास्तु' 'यदि स्यादन्यजातीयो०' 'तदभावे विजातीयः' इत्यादिकात्यायनशौनकवृद्धयाज्ञवल्क्यवचनविरोधः स्यात्। एवं च सापेक्षोऽयं नियमो न निरपेक्ष इति भावः। तथा च सजातीयासंभवे विजातीयोऽपि ग्राह्य इति विजातीयो दत्तकोऽनुगृहीतः। स च वंशमात्रकरत्वाद्ग्रासाच्छादनमात्रभागीत्यन्यदेतत्।

सपिण्डा द्विविधाः। सगोत्रा असगोत्राश्च। सगोत्रसपिण्डा भ्रातृपुत्रादयः। असगोत्रसपिण्डा मातुलपुत्रादयः। तत्रासगोत्रमातुलपुत्रादिसपिण्डापेक्षया भ्रातृपुत्रादिसपिण्डानां सगोत्रत्वेन संनिहितत्वात्सगोत्रसपिण्डाः संनिहितसपिण्डा इत्युच्यन्ते। तेषु सगोत्रसपिण्डेष्वपि भ्रातृपुत्रस्य लाभे संभवति सति स एव पुत्रप्रतिनिधी कार्यः

सति भ्रातृसुते स एव पुत्रीभवतीत्याह मनुः —

सर्वेषामेकजातानामेकश्चेत्पुत्रवान्भवेत् ।

सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥

बृहस्पतिः —

यद्येकजाता बहवो भ्रातरश्च सहोदराः ।

एकस्यापि सुते जाते सर्वे ते पुत्रिणः स्मृताः ॥ इति ।

अत्र वचनद्वयेऽपि भ्रातृसुते च पुत्रप्रतिनिधितया कथंचित्संभवत्यन्यो न प्रतिनिधिः कार्य इत्यवगम्यते । न चापत्यमुत्पादयितव्यमिति नित्योऽयं विधिः । स

इत्यत्र मनुबृहस्पती प्रमाणयति सर्वेषामेकजातानामिति ( म० स्मृ० ९ । १८२ ) । यद्येकजाता इति च । संप्रत्युपलभ्यमानमुद्रितमनुस्मृतौ सर्वेषामित्यस्य स्थाने भ्रातॄणामिति पाठो दृश्यते । एतद्वचनार्थो दत्तकमीमांसाव्याख्यायां मञ्जर्यां विस्तरेणोक्तस्तत्र द्रष्टव्यः । अस्मिन्वचनद्वयेऽन्यस्य पुत्रेणान्यस्य पुत्रवत्त्वादर्शनाद्भ्रातृपुत्रेण भ्रात्रन्तरस्य पुत्रवत्त्वाभिधानानुपपत्तेर्भ्रातृसुते पुत्रत्वातिदेशः प्रतीयते । तस्यैतावदेव तात्पर्यम् । यद्भ्रातृपुत्र प्रतिनिधितया लब्धुं संभवति नान्यः पुत्रीकर्तव्यः । न पुनर्विधिनाऽगृहीतस्यैव तस्य पुत्रत्वं प्रतिपाद्यते । अकृतस्यैव भ्रातृपुत्रस्य पुत्रत्वे त्रयोदशप्रसक्त्या ' पुत्रान् द्वादश यानाह० ' ( म० स्मृ० ९ । १५८ ) इति मनूक्तपुत्रगतद्वादशसंख्याविरोधापत्तिः स्यात् ।

ननु भ्रातृपुत्रे पुत्रातिदेशाभिधानात्स्वपुत्रेणेव भ्रातृपुत्रेणापि समस्तपितॄणां पिण्डोदकादिक्रियाणामलोकतानंशविच्छेदपरिहारस्य च संभवात्फलनिष्पत्तौ तत्साधन इव न भ्रातृपुत्रे प्रतिग्रहविधिः प्रवर्तितुमर्हति प्रयोजनसिद्धेरित्यतो विधिनाऽपरिगृहीतस्यैव तस्यापुत्रपितृव्यपुत्रत्वं भवत्वित्याशङ्कते — न चेति । ' ऋतौ भार्यामुपेयात् ' ' प्रजामुत्पादयेत् ' इत्यादिश्रुत्युक्तापत्योत्पादनविधेर्नित्यत्वं ' ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात् ' ( जै० न्या० ६ । २ । ३१ ) इत्यत्र सिद्धान्तितम् । नित्यस्य च मुख्येन गौणेन वा प्रकारेणानुष्ठानमावश्यकम् । अन्यथा प्रत्यवायापत्तिः । अकरणे प्रत्यवायजनकस्यैव नित्यत्वात् । ततश्च भ्रातृपुत्रे ' सर्वेषामेकजातानां० ' इत्यादिभिः पुत्रत्वातिदेशे सति पुत्रत्वप्रयुक्तकार्यस्य पिण्डोदकदानादेरपुत्रस्यालोकताया परिहारस्य जातत्वेन न पुनस्तत्परिहारार्थं प्रवृत्तिरुपपद्यते । अर्थाद्भ्रातृपुत्रस्य दत्तकविधिनाऽस्वीकृतस्यैव पुत्रत्वमस्तु । अत एवापुत्रपितृव्यस्य भ्रातृजः सुतः पुत्रो भवति । परिग्रहविधिमन्तरैव पुत्रत्वातिदेशात् । स एव च भ्रातृपुत्रः पितृव्यस्य पिण्डोदकादिक्रियां कुर्यादिति बृहस्पतिः

यथाकथंचित्पालनीयस्तत्र भ्रातृव्ये पुत्रातिदेशेन तत्फलस्य पिण्डोदकादेर्लौकलापरिहारस्य च सिद्धत्वेन न पुनस्तत्पद्धतिरत एवाकृतस्यैव भ्रातृपुत्रस्य पुत्रत्वम् ।

अपुत्रस्य पितृव्यस्य तत्पुत्रो भ्रातृजो भवेत् ।
स एव तस्य कुर्वीत श्राद्धपिण्डोदकक्रियाम् ॥

इति बृहत्पराशरस्मरणात् । भ्रातृव्ये सति तु न दत्तकाद्युपादानमिति वाच्यम् । भ्रातृव्यस्य पुत्रातिदेशेन लोकतापरिहारादिसाधकत्वेऽपि नामसंकीर्तनोचि-

स्मरति । तस्माद्भ्रातृपुत्रे सति न दत्तकाद्येकादशप्रतिनिधीनां ग्रहणं कार्यमिति चेन्न । भ्रातृसुते पुत्रत्वातिदेशात्तेन भ्रातृव्येण श्राद्धादिकरणात्पितृव्यस्यालोकतादेः परिहारेऽपि नामसंकीर्तनोचितं यद्वंशकरत्वं तन्न सिध्येत् । अमुकस्यायं वंश इत्येवमविच्छिन्नवंशपरम्परया लोके पितृव्यनाम्ना व्यवहारो न स्यादिति यावत् । नहि लोके पुत्रपौत्रादिपरम्परयाऽमुकस्यायं वंश इति यथा पितृनाम संकीर्त्यते तद्वदमुकस्यायं वंश इति पितृव्यनाम्ना कोऽपि वंशं व्यपदिशति । तस्मात्तत्सिद्ध्यर्थं दत्तकाद्युपादानमावश्यकम् । सत्येवं पुत्रसादृश्येन ग्राह्येषु मुख्यत्वाद्भ्रातृसुत एव विधिना परिग्राह्य इत्याशयः ।

ननु लोकेऽकृतभ्रातृसुतवंशस्य पितृव्यनाम्ना व्यपदेशो मा भवतु लोकास्त्ववशा एव . परंतु पुत्रातिदेशाच्छास्त्रतस्तादृशव्यपदेशे काऽनुपपत्तिरिति चेदुच्यते । यदि तु विधिवदपरिगृहीते भ्रातृपुत्रेऽतिदेशबलात्परिग्रहविधिमन्तरैव पितृव्यपुत्रत्वं स्यात्तर्ह्यौरसदत्तकादिद्वादशविधपुत्रवदपरिगृहीतस्यापि भ्रातृसुतस्य पत्नीतः पूर्वमेव धनहारित्वपिण्डदत्वौचित्येन ' पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा । तत्सुता गोत्रजो बन्धुः शिष्यः सब्रह्मचारिणः ' ( या० स्मृ० २ । १३५ ) इति धनग्राहिणां क्रमबोधकवाक्ये भ्रातॄणामनन्तरं तत्सुता इति भ्रातृसुतनिवेशनमनुपपन्नं स्यात् । तस्माद्विधिना परिगृहीतस्यैव भ्रातृपुत्रस्य नामसंकीर्तनोचितवंशकरत्वं भवति नापरिगृहीतस्येति ज्ञाप्यते । तेन च पितृणामाकरणादिकेवलपारलौकिकफलार्थं भ्रातृपुत्रवताऽपुत्रेण दत्तकादिस्वीकारो न कर्तव्यः । विधिवदपरिगृहीतेन भ्रातृपुत्रेणैव तन्निर्वाहात् । किंतु पत्न्यादिभ्यः पूर्वं मदीयपिण्डदानरिक्थाधिकारी भूत्वा नामसंकीर्तनोचितवंशकरः कश्चित्स्यादिति कामनायां भ्रातृपुत्र एव दत्तकविधिना स्वीकार्य इति भ्रातॄणामिति वचनमपि चरितार्थम् ।

किंच निरुक्तं वचनद्वयं सति भ्रातृपुत्रे दत्तकादिप्रतिनिधिग्रहणं न कार्यमित्येवं दत्तकाद्युपादानं न निषेधति । किंतु पिण्डोदकदानादिकर्तृत्वरूपो यः

सर्वथाकरत्वानुपपत्त्या तदर्थं तदुपादानस्याऽऽवश्यकत्वात् । किंचेदं हि वचनद्वयं सति भ्रातृपुत्रे न दत्तकाद्युपादाननिषेधकं परंतु श्राद्धादिकर्तृत्वरूपपुत्रधर्मातिदेशकम् । अन्यथा सत्यपि भ्रातृपुत्रे क्षेत्रजपुत्रोत्पादनविधिविरोधापत्तेः ।

अकृता वा कृता वाऽपि यं विन्देत्सदृशात्सुतम् ।
पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम् ॥

इति वचने दौहित्रेऽपि पौत्रातिदेशसत्त्वाद् दौहित्रसत्त्वेऽपि प्रागुक्तयुक्त्या दत्तकाद्यनुपादानप्रसङ्गाच्च ।

ननु सत्यपि भ्रातृपुत्रे दत्तकाद्युपादानस्य शास्त्रीयत्वे 'बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः' इति बृहस्पतिवचने

सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत् ।

---

पुत्रधर्मैस्तस्यातिदेशं करोतीत्यवश्यं वक्तव्यम् । अन्यथेति । उक्तवैपरीत्ये । निरुक्तवचनद्वयस्य भ्रातृपुत्रे सति दत्तकाद्युपादाननिषेधपरत्वे सतीत्यर्थः । 'यस्तल्पजः प्रमीतस्य०' ( म० स्मृ० ९ । १६७ ) इति मनुवचनेन भ्रातृपुत्रे सत्यपि यः क्षेत्रजपुत्रोत्पादनविधिराम्नातः स विरुध्येत । अतो निरुक्तवचनद्वयं श्राद्धादिकर्तृत्वरूपपुत्रधर्मातिदेशकं, न तु भ्रातृपुत्रे सति दत्तकाद्युपादाननिषेधकमित्यवगम्यते ।

ननु यदा सर्वथा भ्रातृपुत्रो नास्ति तदा क्षेत्रजपुत्रोत्पादनविधिश्चारितार्थ इति तद्विरोधाभावात्कथमिव निरुक्तवचनद्वयं न दत्तकाद्युपादाननिषेधकमित्यवगन्तुं शक्यमित्यरुचेराह—अकृता वेति । ( म० स्मृ० ९ । १३६ ) इति मनुवचनेन दुहितुः पुत्रे पौत्रातिदेशस्य प्रतीतेर्दौहित्रसत्त्वेऽपि 'भ्रातृव्ये पुत्रातिदेशेन तत्फलस्य पिण्डोदकादेरलोकतापरिहारस्य च सिद्धत्वेन न पुनस्तत्र प्रवृत्तिः' इत्यादिप्रागुक्तरीत्या दत्तकादिप्रतिनिध्यकरणापत्तिः स्यात् । तस्मान्निरुक्तवचनद्वयं न दत्तकाद्युपादाननिषेधकं किंतु पुत्रधर्मातिदेशकमित्येव युक्तम् ।

नन्वेवं यथा भ्रातृपुत्रे सत्यपि दत्तकादेरुपादानं शास्त्राभिमतं तथा सपत्नीपुत्रे पुत्रधर्मातिदेशप्रतीतेस्तस्मिन् सत्यपि दत्तकादेरुपादानं शास्त्रीयमस्त्वित्याशङ्कते—नन्वित्यादि । बह्वीनामिति । एकः पतिर्यासां तासां सपत्नीनामित्यर्थः । 'नित्यं सपत्न्यादिषु' ( पा० सू० ४ । १ । ३५ ) इति नित्यं नकारः । एष एवेति । भ्रातृणामेकजातानामित्याद्युक्तो विधिः स्मृत इत्यर्थः । इति बृहस्पतिवचनम् । सर्वासामेकपत्नीनामिति ( म० स्मृ० ९ । १८३ )। अस्यार्थः । एकपतिकानां सर्वासां स्त्रीणां मध्ये यद्येका पुत्रवती स्यात्तदा तेन पुत्रेण सर्वास्ताः

सर्वांस्तांस्तेन पुत्रेण प्राह पुत्रवतीर्मनुः ॥

इति मनुवचने च सपत्नीपुत्रे पुत्रधर्मातिदेशेन सत्यपि तस्मिन्दत्तकाद्युपादा-नमस्त्विति चेन्न । यथा तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा भवति, वाजिभ्यो वाजिनमित्यत्राऽऽमिक्षार्थं प्रवृत्तस्योद्देश्यीभूतामिक्षापचारे आमिक्षा पुरुषं

पुत्रयुक्ता मनुराह । ततश्च सपत्नीपुत्रे सति सपत्न्यन्तरेण न दत्तकादिपुत्राः कर्तव्या इति वचनद्वयस्य समान एवार्थः । अत्र वचनद्वयेऽपि सपत्नीपुत्रेण सपत्न्यन्तरस्य पुत्रवत्त्वाभिधानानुपपत्त्या सपत्नीपुत्रे पुत्रधर्मातिदेशो वक्तव्यः । ततश्च सपत्नीपुत्रे सत्यपि सपत्न्यन्तरस्य दत्तकादिपुत्रीकरणमास्ताम् । यथा भ्रातृसुते सत्यपि दत्तकादिपुत्रग्रहणं शास्त्रसिद्धं तद्वदिदमपि शास्त्रसिद्धं स्यादिति शङ्काकाशयः । तदेतत्खण्डयति—नेति । यथेति । 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' तप्ते पयसि दधन्यानीते सति यः पयसो घनीभावः साऽऽमिक्षा विश्वदेवेभ्यो दीयते । यच्चावशिष्टं नीरं ( महाराष्ट्रभाषायां 'कवकवित' इत्यु-च्यमानं ) जलं तद्वाजिनं वाजिदेवेभ्यो दीयत इति तदर्थः । अनेनाऽऽमिक्षा-यागो वाजिनयागश्चोक्तः । अत्र दध्यानयनस्य किमामिक्षा प्रयोजनमथवा वाजि-नमिति संशय्य आमिक्षैव प्रयोजनं न तु वाजिनमिति सिद्धान्तितम् । यस्माद्घनी-भूतं पय एवाऽऽमिक्षा न तु द्रव्यान्तरमिति सति तच्छब्देनावगम्यते । यस्मिन्-पयसि दधि प्रक्षिप्यते साऽऽमिक्षेति तच्छब्देन पयसः परामर्शात्पय एवाऽऽमिक्षेति लभ्यत इति भावः । किंच मधुरः पयोरस आमिक्षायामनुभूयते न वाजिने । तस्मात्प्राधान्येन पयसो घनीभावावस्थां जनयितुं दध्यानीतमित्यामिक्षैव दध्यानयनस्य प्रयोजनम् । वाजिनं तु तदनुनिष्पादीति न प्रयोजकम् । तदुक्तं जैमिनिना मुनिना— 'संसर्गरसनिष्पत्तेरामिक्षा वा प्रधानं स्यात्' ( जै० सू० ४ । १ । २२ ) इति । संसर्गेण दधिसंसर्गेणाऽऽमिक्षायां रसोत्पत्तेर्विनिगमकत्वात्प्रधानं दध्यानयनप्रवृत्त्युद्देश्य-मामिक्षा, वाजिनं तु न तथेति तदर्थः । एवं च दध्यानयनस्योद्देश्यभूताऽऽमिक्षा नतु वाजिनमिति तात्पर्यम् । अस्मिन्स्थले यथाऽऽमिक्षानिष्पादनार्थं प्रवृत्तस्यो-द्देश्यभूताया आमिक्षाया येन केनापि कारणेनापचारे सत्यामिक्षानिष्पत्त्यर्थं तप्ते पयसि दध्यानयनार्थं पुनः पुरुषस्य स्वातन्त्र्येण प्रवृत्तिरुपपद्यते । तेन च पितृणापाकरणादिकेवलपारलौकिकफलार्थं भ्रातृपुत्रवताऽपुत्रेण दत्तकादिस्वीकारो न कर्तव्यः । विधिवदपरिगृहीतेन भ्रातृपुत्रेणैव तन्निर्वाहात् । किंतु पत्न्यादिभ्यः पूर्वं मदीयपिण्डदानरिक्थाधिकारी भूत्वा नामसंकीर्तनोचितवंशकरः कश्चित्स्यादिति काम-

प्रवर्तयति । न तु वाजिनम् । अनुद्देश्यत्वेनाप्रयोजकत्वात् । यथा वा पितुः क्षयाहे पित्रादित्रिकस्य पार्वणे कृते मातामहादिश्राद्धाय न पुनः पार्वणारम्भः । तस्य पितृश्राद्धाधीनप्रवृत्तेः । तथाऽत्रापि भर्तुराज्ञाबलेन पुत्रोत्पादनाय प्रवृत्तायास्तत्पुत्राभाव एव तदुपादानं नतु तत्पुत्रानपचारेऽपि स्वपुत्रापचारे तदुपादानम् । तस्मात्पु-

नार्थां भ्रातृपुत्र एव दत्तकविधिना स्वीकार्य इति भ्रातृणामिति वचनमपि चरितार्थम् ।

दृष्टान्तान्तरमाह-- यथा वेति । पितुः क्षयाह इति । अयं भावः । अमावास्यादिपर्वतिथिषु पितुः पार्वणश्राद्धं विहितम् । तत्र च न केवलं पित्रादित्रयमेव किंतु मातामहादित्रयमपि पूज्यते । 'पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम्' इति योग्यवचनात् । अत्र पितृश्राद्धमुद्दिश्य मातामहश्राद्धविधानाद्देश्यत्वात्पितृश्राद्धं प्रधानं मातामहश्राद्धं त्वप्रधानमित्ययमप्यर्थोऽस्माद्वचनाज्ज्ञायते । ततश्च यदि पितृश्राद्धप्रसक्तिस्तर्हि तत्र मातामहश्राद्धमपि कार्यम् । नतु पार्थक्येन मातामहश्राद्धं करणीयम् । यदा चामावास्यायां पितुर्मरणं तदा 'अमावास्यां क्षयो यस्य प्रेतपक्षेऽथवा पुनः । सपिण्डीकरणादूर्ध्वं तस्योक्तः पार्वणो विधिः' इति वचनात्पार्वणश्राद्धद्वयं प्रसक्तम् । एकं मृततिथिनिमित्तकं द्वितीयममावास्यानिमित्तकम् । तत्र मृततिथिनिमित्ते श्राद्धे पित्रादिकपार्वणमेव । क्रतुसमन्वितं मुक्त्वा तथाऽऽद्यं श्राद्धषोडशम् । प्रत्याब्दिकं तु शेषेषु पिण्डाः स्युः षडिति स्थितिः' इति वचनात्क्षयाहश्राद्धे 'पितरो यत्र पूज्यन्ते०' इत्यस्याप्रवृत्तेः । अमावास्यानिमित्तकश्राद्धे तु पार्वणद्वयम् । तत्र प्रथमतः पितुः क्षयाहश्राद्धे पित्रादित्रिकस्य पार्वणे कृते मातामहादिश्राद्धकरणाय पुनः पार्वणारम्भो न भवति । मातामहादिश्राद्धस्य पितृश्राद्धाधीनप्रवृत्तिकत्वात् । पितृश्राद्धं च पित्रादिपार्वणेनैव निर्व्यूढम् । यदि तु केनापि कारणेन पितृश्राद्धापचारः स्यात्तदा तदर्थं पुनः पार्वणारम्भः स्यात् । पितृश्राद्धस्य प्राधान्यात् । मातामहश्राद्धस्यानुद्देश्यत्वेनाप्राधान्यात्तदपचारे न पुनः पितृपार्वणारम्भ इति । तद्वत्प्रकृतस्थले भर्त्रनुज्ञां विना स्त्रिया न पुत्रो ग्राह्यो नापि देय इति नियमाद्भर्त्रनुज्ञानुसारेण भर्तुः पुत्रवत्त्वं संपादयितुं प्रवृत्ता स्त्री यदि भर्तुर्न कथमपि पुत्रवत्त्वं तर्ह्येव पुत्रं ग्रहीतुं शक्नुयात् । यदा तु भर्तुः पुत्रवत्त्वमथ च स्वस्या ( आत्मनः स्त्रिया. इति यावत् ) अपुत्रवत्त्वं तदा स्त्री दत्तकं ग्रहीतुं न शक्नोति । भर्तुरपुत्रवत्त्वस्य दत्तकग्रहणं प्रति प्रवर्तकत्वेऽप्यात्मन ( स्त्रियाः ) अपुत्रवत्त्वस्य दत्तकग्रहणं प्रत्यप्रवर्तकत्वात् । तथा च सपत्नीपुत्रसत्त्वे सपत्न्यन्तरस्य दत्तकग्रहणं शास्त्रेण

तरप्रयोजकत्वात् । तत्रालोकतापरीहारोऽस्य। न स्यादित्यपेक्षायां मनुबृहस्पति-वचनद्वयं, सपत्नीपुत्रे पुत्रातिदेशनाऽलोकतापरीहारस्याद्योपपादकम् । भर्तृवंश-मन्तरेण स्त्रिया वंशान्तरासंभवेन सति सपत्नीपुत्रे न दत्तकाद्युपादानम्। भ्रातृ-पुत्रस्य तु वंशकरत्वाभावेन सत्यपि तस्मिन्नुपादीयन्ते दत्तकादय इत्येतावान्परं विशेषः ।

ननु सति भ्रातृसुते तस्यैव पुत्रीकरणावश्यंभावे यद्येक एव भ्रातृपुत्रस्तत्रैव तदसंभवः । न त्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि संतानाय पूर्वेषा-मिति वसिष्ठस्मरणादिति चेन्न । एतस्य द्व्यामुष्यायणेतरविषये सावकाशत्वात् ।

नाभ्यनुज्ञायते चेत्सपत्न्यन्तरस्य नापुत्रस्य लोकोऽस्तीत्युक्तालोकतायाः परिहारः पुंना-मनरकात्त्राणं चेत्येवमादिकं न स्यादिति चेन्न । 'बह्वीनामेकपत्नीनाम्०' 'सर्वा-सामेकपत्नीनाम्०' इति मनुबृहस्पतिवचनाभ्यां सपत्नीपुत्रे सापत्न्यन्तरनिरूपित-पुत्रातिदेशस्य सत्त्वेनालोकतापरिहारस्य श्राद्धाद्यनुष्ठानद्वारा नरकत्राणस्य च जायमा-नत्वात् । वंशरक्षणं तु भर्तृवंशमन्तरेण स्त्रियाः पृथग्वंशाभावेन सपत्नीपुत्रेणैव संप-न्नमिति कृत्वा सपत्नीपुत्रसत्त्वे न सपत्न्यन्तरस्य दत्तकादिग्रहणमुचितम् । भ्रातृपु-त्रसत्त्वे त्वस्य यद्यपि श्राद्धादिपारलौकिककार्यं सिध्यति तथाऽपि भ्रातृपुत्रेणामुकस्यायं वंश इति पितृव्यनाम्ना व्यवहाराभावात्तादृशव्यवहारसिद्ध्यर्थं सत्यपि भ्रातृसुते दत्तका-द्युपादानमावश्यकमित्येतावान्सपत्नीपुत्रभ्रातृपुत्रयोर्विशेष इति बोध्यम् ।

एवं च सति भ्रातृपुत्रे तत्पुत्रप्रतिनिधीकरणस्यैवाऽऽवश्यकत्वे यद्येक एव भ्रातृ-पुत्रस्तदा तद्ग्रहणस्यासंभवः । 'न त्वेकं पुत्रं दद्यात् ०' इति वसिष्ठवचनादित्या-शङ्क्य न त्वेकमिति निषेधस्य केवलदत्तकपरत्वान्नैवमित्याह---एतस्येति । न त्वेकमित्येकपुत्रदानग्रहणनिषेधस्य व्यामुष्यायणव्यतिरिक्ते केवलदत्तके चारितार्थ्याद्व्या-मुष्यायणदत्तके स निषेधो न प्रवर्तते ।

ननु न त्वेकमिति निषेधः केवलदत्तके प्रवर्तते व्यामुष्यायणे च नेत्यत्र किं बीजमत आह---स हि संतानायेति । स ह्येकपुत्रः पूर्वेषां पूर्वजानां संतानाय वंशप्रवृत्तये संतानाविच्छेदकरो भवति । तस्मिंश्चेदेकस्मिन्पुत्रे दत्ते स्ववंशविच्छेदः स्यात् । अत एकपुत्रो न देयो नापि प्रतिग्राह्य इत्येकपुत्रदानग्रहणे निषिध्येते । केवलदत्तके आवयोरयमिति संकल्पाभावेन न ममेति त्यागेन च दानान्तर्गतस्य जनकपितुस्स्व-त्वस्य सर्वथा निवृत्तिदर्शनादेकस्मिन् पुत्रे केवलदत्तकत्वेन दीयमाने सति स्ववंश-च्छेदावश्यंभावात्तादृशे दत्तके न त्वेकमिति निषेधश्चरितार्थः । व्यामुष्यायणे त्वावयोरयं पुत्र इति संकल्पाद्दाने न ममेति त्यागाभावाच्च दानान्तर्गतस्य जनक-

द्व्यामुष्यायणे च हेतुवन्निगददर्शितसंततिविच्छेदाभावात् । वेतालस्य च भैरवपुत्रपुत्रीकरणे पौराणिकलिङ्गदर्शनाच्च । यथा -

ततः कदाचिदुर्वश्यां भैरवो मैथुनं गतः ।
तस्यां स जनयामास तनयं नाम सुवेशकम् ॥
तमेव चक्रे तनयं वेतालोऽपि स्वकं सुतम् ।
ततस्तौ तेन पुत्रेण स्वर्ग्यां गतिमवापतुः ॥ इति ।

अथ केन पुत्रो देय इत्याह शौनकः—

नैकपुत्रेण कर्तव्यं पुत्रदानं कदाचन ।
बहुपुत्रेण कर्तव्यं पुत्रदानं प्रयत्नतः ॥ इति ।

पितृसन्तत्वस्यानिवृत्तेरेकस्मिन्नपुत्रे द्व्यामुष्यायणत्वेन दीयमानेऽपि स्ववंशच्छेदाभावेन तादृशे दत्तके न त्वेकमिति निषेधो न प्रवर्तत इति भावः । तदेतदुक्तं 'द्व्यामुष्यायणे च हेतुवन्निगददर्शितसंततिविच्छेदाभावात्' इति । हेतुवन्निगदो हेतुसहितं वचनं न त्वेकमित्यादि । तत्र हेतुः 'स हि संतानाय' इति । तेन दर्शितः सूचितो यः संततिविच्छेदस्तस्याभावादित्यर्थः । द्व्यामुष्यायणो हि जनकस्य प्रतिग्रहीतुश्चेत्युभयोः पित्रोः पिण्डोदकादि कुर्वन्नुभावपि वंशौ रक्षतीति तात्पर्यम् । किंच वेतालभैरवौ द्वौ सोदरभ्रातरौ शंकरात्मजौ । तयोर्मध्ये भैरवः सुवेशाख्येनैकेनैव पुत्रेणौरसपुत्रवानास । अपुत्रेण च वेतालेन स एवैकः पुत्रः स्वसुतः कृतः । तेनैकेनैव पुत्रेण तावुभौ स्वर्ग्यां गतिं प्रापतुः, इति कालिकापुराणस्थकथानुसंधानादपि द्व्यामुष्यायणे वंशच्छेदाभावेन न त्वेकमिति निषेधो न प्रवर्तत इत्यवगम्यते । तदेव कालिकापुराणं निर्दिशति-ततः **कदाचिदुर्वश्यामित्यादि 'स्वर्ग्यां गतिमवापतुः'** इत्यन्तम् ।

केन पुत्रो ग्राह्यः कीदृक् च ग्राह्य इत्युपपाद्येदानीं केन पुत्रो देय इति प्रतिपादयति—**नैकपुत्रेणेति** । संख्याशब्दानामितरनिवृत्तिपूर्वकस्वार्थप्रतिपादकत्वस्वाभाव्यात्सर्वं वाक्यमसति बाधके सावधारणमिति न्यायाच्चैक एव पुत्रो यस्येत्यवधारणापूर्वपदो बहुव्रीहिः । एकेनैव पुत्रेण पुत्रवता पुरुषेण स एककः पुत्रोऽन्यस्मै केवलदत्तकत्वेन न देयः । एकस्यैव सतः पुत्रस्य दाने स्वसंतानविच्छेदः कुतः स्यादिति कृत्वा । एकस्यापि द्व्यामुष्यायणत्वेन दाने न प्रतिबन्धः । तादृग्रूपेण दाने न स्ववंशविच्छेदो नापि परवंशच्छेद इत्यर्थस्यानुपदमेवोक्तत्वात् । **बहुपुत्रेणेति** । बहवः पुत्रा यस्य तादृशेन पुरुषेण पुत्रदानं कर्तव्यमिति विधीयते । नन्विदं बहुपुत्रवत्कर्तृकं पुत्रदानं न विधातव्यम् । एकपुत्रवत्कर्तृकपुत्रदानस्य निषेधेनैव द्व्यादिपुत्रवता पुत्रदानकर्तव्यताया अर्थत उक्तत्वाद्बहुपुत्रवत्कर्तृकपुत्रदानस्य सिद्धत्वात् । सत्यमेवं

द्विपुत्रस्यापि पुत्रदानेऽपरपुत्रनाशे वंशविच्छेदमाशङ्क्याऽऽह—बहुपुत्रेणेति । सि-

यदुच्यते बहुपुत्रेण कर्तव्यमिति तत्सिद्धे सत्यारम्भो नियमार्थ इति न्यायेन नियमार्थम् । नियमश्चेत्थम्—नियमस्य सजातीयापेक्षत्वादनेकपुत्रवता यदि पुत्रदानं कर्तव्यं तर्हि बहुपुत्रेणैवेति । तेन यस्य द्वावेव पुत्रौ स्तस्तेनापि पुत्रदानं न कर्तव्यमिति सिध्यति ।

ननु पुत्रद्वयवतो योऽयं पुत्रदाननिषेध उक्तः सोऽनुपपन्नः । एकपुत्रकर्तृक-पुत्रदानस्यैव पुत्रद्वयवत्कर्तृकपुत्रदानस्य स्ववंशच्छेदापादकत्वाभावादित्याशङ्क्याऽऽह—द्विपुत्रस्यापीति । पुत्रद्वयमध्य एकस्य दानेऽपरो यद्यपि स्ववंशरक्षणायावस्थित एव तथाऽपि 'एकपुत्रो ह्यपुत्रो मे मतः कौरवनन्दन' इति न्यायेनैकपुत्रताया अपुत्रतासमत्वाद्दैवदुर्विलासात्कदाचिदपरपुत्रनाशे सति वस्तुत एवापुत्रतायाः संभवाच्चा-पुत्रतायाश्च वंशविच्छेदावहत्वात्पुत्रद्वयवताऽपि पुत्रदानं न कर्तव्यमित्युच्यते । तर्हि कीदृशेन पुत्रवता पुत्रदानं कर्तव्यमित्याशङ्क्याऽऽह—बहुपुत्रेणेति ।

ननु यस्य त्रयः पुत्राः सन्ति तेनापि पुत्रदानं न कर्तव्यमित्यापतति । त्रयाणां मध्य एकस्य दाने द्वयोरवस्थितावपि कदाचिद्दैवविपर्यासेनावस्थितयोर्द्वयोरपि नाशः संभाव्येत । ततश्चाऽऽत्मनो निष्पुत्रतया वंशविघातः स्यादिति यथा सांभा-वनिको वंशविघातः पुत्रद्वयवतः पुत्रदानप्रतिबन्धको भवति तद्वत्पुत्रत्रयवतोऽपि पुत्र-दाने प्रतिबन्धकः स्यादिति चेन्न । एकस्य पुत्रस्य दाने कृतेऽवशिष्टस्यैकस्य पुत्रस्य सांभावनिको विनाश एकग्रन्थिविस्रंसनन्यायसहकृतः । एकस्य पुत्रस्य दाने-नावशिष्टपुत्रद्वयस्थले त्वेकग्रन्थिविस्रंसनन्यायाप्रवृत्तेः । प्रत्युत प्रथमस्य ग्रन्थेरुपरि द्विती-यस्मिन् ग्रन्थौ दीयमाने ग्रन्थिद्वयस्यापि दाढर्यदर्शनेन द्विर्बद्धं सुबद्धं भवतीति न्यायानुगतत्वाच्चावशिष्टस्य पुत्रद्वयस्य विनाशो न कथमपि कल्पयितुं शक्यः । तस्माद्वंशविच्छेदात्मकप्रतिबन्धकाभावाद्बहुपुत्रवतः पुत्रदाने प्रतिबन्धो नास्ति ।

ननु यस्यैक एव पुत्रस्तस्य पुत्रदाननिषेधेऽपि पुत्रान्तरग्रहणं प्रसज्जते । लोकप्रसिद्धेनैकग्रन्थिविस्रंसनन्यायेन तस्यैकस्य विनाशे संभाविते पिण्डोदकादिक्रिया-लोपापत्तेरिति चेद्भ्रान्तोऽसि । पिण्डोदकादि हि पुत्रीकरणे हेतुभूतम् । पुत्रग्रहणाधि-कारी त्वपुत्रः । अपुत्रेणैव कर्तव्य इत्युक्तेः । अपुत्र इत्यस्य च पुत्रसंसर्गाभाववानित्यर्थः । तदभाववत्ताबुद्धिं प्रति तद्वत्तानिश्चयस्य प्रतिबन्धकत्वेन पुत्रसत्त्वे तदभाववत्त्वस्य वक्तुमश-क्यत्वेनाधिकाराभावान्नैकपुत्रवत्स्थले पुत्रीकरणप्रसङ्गः । कथं तर्हि पुत्रद्वयवत्स्थले एकस्य दानेऽपि द्वितीयस्यावशिष्टत्वेन संततिविच्छेदज्ञानम् । येन पुत्रद्वयवतोऽपि पुत्रदानं निषिध्येतेति चेन्न । नैकपुत्रेण कर्तव्यं पुत्रदानं कदाचन, इत्येकपुत्रदान-

यास्तु जीवति भर्तरि तदनुमतौ प्रोषिते मृते वा तदनुज्ञां विनाऽपि । यथा वसिष्ठः—

'न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञानाद्भर्तुः' इति ।

अनुमतिश्चाप्रतिषेधेऽपि भवति । अप्रतिषिद्धं परमतमनुमतं भवतीति न्यायात् । निरपेक्षदानमाह याज्ञवल्क्यः—

दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् ।

---

निषेधेनैव बहुपुत्रसत्त्वे पुत्रदानस्य सिद्धत्वाद् 'बहुपुत्रेण कर्तव्यं पुत्रदानं प्रयत्नतः' इति बहुपुत्रसत्त्वे पुत्रदानविधिसामर्थ्यात्पुत्रद्वयवताऽपि पुत्रदानं न कर्तव्यमिति बोध्यते । न च तादृशस्थले पुत्रदाननिषेधहेतोः संतानविच्छेदस्याभावः । एकस्य दानेऽप्यपरस्यावशिष्टत्वादिति वाच्यम् । पुत्रद्वयवतः पुत्रदाननिषेधसामर्थ्यादेव तादृशस्थलेऽपि संतानविच्छेदोऽस्त्येवेति ज्ञायते । कथमुपपद्यतामिति चेत्संतत्यविच्छेदसाधकस्य द्वितीयस्यावशेषेऽपि कदाचिद्दैवदुर्विलासात्तस्यापि नाशे संततिविच्छेदः स्यादिति सांभावनिकस्य पुत्राभावस्य तत्र सत्त्वात् । तथा च पुत्रद्वयस्थले पुत्रदाननिषेधबलादेव काल्पनि(सांभावनि)कोऽपि पुत्राभावः पुत्रदाननिषेधे हेतुः । पुत्रपरिग्रहे तु साक्षात्पुत्राभावो हेतुः । तत्र काल्पनिकपुत्राभावग्रहणे प्रमाणाभावादिति विशेषः ।

अथ पुरुषवत्स्त्रियाः पुत्रदानप्रतिग्रहाधिकारं विवेचयन्नाह—**स्त्रियास्त्विति** । न स्त्री पुत्रं दद्यात्० अन्यत्रानुज्ञानाद्भर्तुरिति वसिष्ठेन भर्त्रनुज्ञां विना स्त्रियाः पुत्रदानादिनिषेधाभिधानाद्भर्त्रनुज्ञासत्त्वे स्त्री पुत्रस्य दाने परिग्रहे वा प्रभवतीत्यवगम्यते । भर्त्रनुज्ञा च तज्जीवने संनिधाने च सति संभवति । इति स्त्रियाः पत्युर्जीवनसंनिधानयोः सतोर्भर्त्रनुज्ञया पुत्रदानाद्यधिकारः । प्रोषिते ( प्रवासं गते ) मृते वा भर्तर्यनुमतेरसंभवादनुज्ञां विनैवाधिकारः ।

ननु निरुक्तवसिष्ठवचनेन स्त्रिया अधिकारस्य भर्त्रनुज्ञासापेक्षत्वावगमादनुज्ञाया असंभवावस्थायां कथं स्त्रियाः पुत्रदानाद्यधिकार इति चेन्न । 'शुक्रशोणितसंभवः पुरुषो मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवत इति वसिष्ठेन स्त्रियाः पुत्रदानाद्यधिकारप्रतिपादनात् । नन्वेवं चेत्कथं भर्त्रनुज्ञासापेक्षत्वमुक्तम् । यतो मातापित्रोः पुत्रोत्पादने समानत्वादिति चेद्भ्रान्तोऽसि । पुमान् पुंसोऽधिके वीर्ये ( म० स्मृ० ३ । ४९ ) इति वीर्याधिक्यनिमित्तकत्वेन पुत्रोत्पत्तौ पुरुषस्य प्राधान्यात्तदनुज्ञासापेक्षत्वं स्त्रिया उक्तमिति बोध्यम् । **अनुमतिश्चेति** । भर्त्रनुज्ञा च न केवलं 'त्वं पुत्रं गृहाण' इति स्पष्टोक्त्या भवति किंत्वप्रतिषिद्धमनुमतं भवतीति न्यायेन 'त्वं पुत्रं मा ग्रहीः' इति निषेधाभावेनापि भवति । भर्त्रनुज्ञानिरपेक्षपुत्रदाने प्रमाणं प्रदर्शयन्नाह—**माता पिता वेति** ( म०

तथा—मातापितृभ्यामुत्सृष्टस्तयोरन्यतरेण वा । इति ।

## ( अथ द्वितीयं प्रकरणम् ) ।

अथ पुत्रपरिग्रहविधिमाह शौनकः—

शौनकोऽहं प्रवक्ष्यामि पुत्रसंग्रहमुत्तमम् ।
अपुत्रो मृतपुत्रो वा पुत्रार्थं समुपोष्य च ॥

संग्रहं संग्रहणविधिम् । उपोष्य ग्रहणात्पूर्वदिने कृतोपवासः । वृद्धगौतमः—

वाससी कुण्डले दत्त्वा उष्णीषं चाङ्गुलीयकम् ।
आचार्यं धर्मसंयुक्तं वैष्णवं वेदपारगम् ॥
मधुपर्केण संपूज्य राजानं च द्विजाञ्शुचीन् ।

राज्ञो विप्रकृष्टत्वे ग्रामस्वामिनम् ।

बन्धूनाहूय सर्वांस्तु ग्रामस्वामिनमेव च ।

इति स्मरणात् । द्विजानिति बहुत्वं त्रित्वपर्यवसितम् । कपिञ्जलन्यायात् ।

---

स्मृ० ९ । १६८ ) इति । अत्र स्वातन्त्र्येण मातुः पुत्रदानं विधीयते । आधिकं दत्तकमीमांसाव्याख्यायां मञ्जर्यां मत्कृतायां द्रष्टव्यम् ।

---

## ( अथ द्वितीयं प्रकरणम् ) ।

एवं पुत्रग्रहणमभिधाय तद्विधिं प्रदर्शयन्नाह—**शौनकोऽहमिति** । **संग्रहमिति** । संगृह्यतेऽनेनेति व्युत्पत्त्या पुत्रपरिग्रहविधिमित्यर्थः । उपोष्येति क्त्वाप्रत्ययश्रवणात्परिग्रहात्पूर्वदिन उपवासं कृत्वेत्यर्थः सिध्यति ।

‘ वाससी कुण्डले ’ इत्यादि ‘ द्विजाञ्शुचीन्, इत्यन्तं वृद्धगौतमवचनम् ।

ननु राज्ञो विप्रकृष्टत्वे न तदाह्वानं सर्वेषां सुकरं भवतीत्यत आह—**विप्रकृष्टत्व इति** । राज्ञो विप्रकर्षश्च जातितो देशतश्चेति द्विधा । तत्र जातितो राज्ञो विप्रकर्षो यथा—राज्ञो यवनान्त्यजादिजातीयत्वे ब्राह्मणकर्तृकपुत्रपरिग्रहे तत्संसदि तदानयनमत्यन्तानुचितम् । देशतो विप्रकर्षो यथा—भरतखण्डे पुण्यपत्तने पुत्रप्रतिग्रहो राजा च यूरोपखण्डे लन्दने निवसति । एतादृशे द्विविधविप्रकर्षे सति राज्ञस्तत्राऽऽनयनं न सुलभमिति तादृशे प्रसङ्गे ग्रामस्वामी ( पाटील, कुलकर्णी, मामलेदार ) स्वजातिघटकः सहासनयोग्यो वा कश्चिदानेतव्यः । बन्धूनाहूय सर्वांस्तु ग्रामस्वामिनमेव चेति स्मृतेरिति भावः । राजाद्यानयनं च दृष्टफलार्थं न त्वदृष्टार्थम् । राजादिसमक्षं पुत्रीकरणे कृते सति सर्वो राजकीयो व्यवहारः सुकरो भवति । द्विजानिति बहुवचनेन श्रूयमाणं द्विजगतबहुत्वं कपि-

द्विजानां पूजनं याचनार्थम् ।

बर्हिः कुशमयं चैव पालाशं चेध्ममेव च ।
एतानाहृत्य बन्धूंश्च ज्ञातीनाहूय यत्नतः ॥
बन्धूनन्नेन संभोज्य ब्राह्मणांश्च विशेषतः ।
अग्न्याधानादिकं तत्र कृत्वाऽऽज्योत्पवनान्तकम् ॥
दातुः समक्षं गत्वा च पुत्रं देहीति याचयेत् ।
दाने समर्थो दाताऽस्मै ये यज्ञेनेति पञ्चभिः ॥

दद्यादिति शेषः । बन्धूनात्ममातृपितृबन्धून् । ज्ञातीन् सपिण्डान् । तदाह्वानं दृष्टार्थम् । बन्धूनाहूतान् । ब्राह्मणान्पूर्ववृतान् । चकारादाहूताञ्ज्ञातींश्च संभोज्येत्यर्थः । तथा—

देवस्य त्वेति मन्त्रेण हस्ताभ्यां परिगृह्य च ।
अङ्गादङ्गेत्यृचं जप्त्वा आघ्राय शिशुमूर्धनि ॥

---

अलन्यायेन त्रित्वपर्यवसायि बोध्यम् । कपिञ्जलानालभेतेति बहुवचनेन बोधितस्य कपिञ्जलगतबहुत्वस्य त्र्यादिपरार्धपर्यन्तसंख्याव्यापकत्वेन त्रयश्चत्वारः पञ्च वेत्यनियमेन संदेहादननुष्ठाने प्रसक्ते बहूनां मध्ये प्रथमं त्रित्वस्योपस्थितत्वात्तत्परित्यागेन चतुष्ट्वादीनां ग्रहणे प्रमाणाभावाद्बहुवचनं त्रित्वे पर्यवसन्नमिति सिद्धान्तितम् । तद्वद्द्विजानिति बहुवचनं त्रित्वपर्यवसायीति भावः । कपिञ्जलो जलचरपक्षिविशेषः । द्विजानां मधुपर्केण पूजनं पुत्रयाचनारूपदृष्टफलार्थम् । मधुपर्को नाम मधुनः पर्कः संपर्को यत्र तादृशं द्रव्यं मिश्रितं दधिमध्वाज्यम् । अथवा—दधि सर्पिर्जलं क्षौद्रं सिता चैतैश्च पञ्चभिः । प्रोच्यते मधुपर्कस्तु० इत्युक्तं दध्यादिद्रव्यपञ्चकम् । 'पुत्रं देहीति याचयेत्' इत्येवमग्रे पूर्वपूजितब्राह्मणद्वारा पुत्रयाचनस्योक्तत्वात् । बर्हिरित्यादि याचयेदित्यन्तं स्पष्टम् । प्रादेशपरिमितचतुःषष्टिसंख्याकदर्भमुष्टिर्बर्हिः । **दाने समर्थ** इति । दानसामर्थ्यं च 'बहुपुत्रेण कर्तव्यम्' इत्यादिनोक्तबहुपुत्रवत्त्वादिकम् । **ये यज्ञेनेति** । ( ऋक्सं० अष्ट० ८ अ० २ वर्ग १ ) । आत्मबन्धून् मातृबन्धून् पितृबन्धूंश्च । तथा सपिण्डान् पूर्ववृतान् ब्राह्मणान् । आहूताञ्ज्ञातींश्च भोजयित्वेत्यर्थः । बन्धूनां ज्ञातीनां चाऽऽह्वानं दृष्टप्रयोजनार्थमेव । तेभ्यो विना व्यवहारसौकर्यं न स्यात् । देवस्य त्वेति ( तै० आरण्य० अध्याय ३ अनुवाक १० ) मन्त्रेण हस्ताभ्यां गृहीत्वा 'अङ्गादङ्गात्संभवसि' ( ऋक्सं० अष्ट० ८ अ० ८ वर्ग २२ ऋ० ६ ) इति मन्त्रं जपित्वाऽऽघ्राय

वस्त्रादिभिरलंकृत्य पुत्रच्छायावहं सुतम् ।

पुत्रच्छाया पुत्रसादृश्यम् । नियोगादिना स्वयमुत्पादनयोग्यत्वमिति यावत् ।

तथा—नृत्यगीतैश्च वाद्यैश्च स्वस्तिशब्दैश्च संयुतम् ।

गृहमध्ये तमादाय चरुं कृत्वा विधानतः ॥

यस्त्वाहृदेत्यृचा चैव तुभ्यमग्नेत्यृचैकया ।

सोमो दददित्येताभिः प्रत्यृचं पञ्चभिस्तथा ॥ इति ।

वृद्धगौतमः—पायसं तत्र साज्यं च शतसंख्यां च होमयेत् ।

प्रजापते न त्वदेतामित्युद्दिश्य प्रजापतिम् ॥ इति ।

वसिष्ठः—पुत्रं प्रतिग्रहीष्यन्बन्धूनाहूय राजनि निवेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वाऽदूरबान्धवं बन्धुसंनिकृष्टमेव गृह्णीयात् । संदेहे चोत्पन्ने दूरबान्धवं शूद्रमिव स्थापयेत् । विज्ञायते ह्येकेन बहूंस्त्रायत इति । निवेशनं गृहम् ।

---

वस्त्रादिना विभूष्य । पुत्रच्छाया पुत्रसादृश्यं तच्च नियोगादिना शास्त्रीयमार्गेण स्वयमुत्पादनयोग्यत्वम् । 'अपुत्रां गुर्वनुज्ञातो०' ( या० स्मृ० १ । ६८ ) इत्युक्तो नियोगः । आदिना 'बीजार्थं ब्राह्मणः कश्चिद्धनेनोपनिमन्त्र्यताम्' इत्युक्तं वेतनदानम् । ताभ्यां स्वयमुत्पादनयोग्यत्वं जिघृक्षितपुत्रे यत्तदेव पुत्रसादृश्यमित्यर्थः । अधिकं दत्तकमीमांसाटीकायां मञ्जर्यां द्रष्टव्यम् । तथेति । वाससी कुण्डले, इत्यारभ्येतः पर्यन्तं यद्वृद्धगौतमेन पुत्रपरिग्रहविधिरुक्तस्तद्वक्ष्यमाणमपि तेनोच्यत इत्यर्थः । नृत्यगीतैश्चेति । वादित्रादिनिःस्वनैः सह गृहमध्ये पुत्रच्छायावहं पुत्रमानीय स्थापयित्वा यस्त्वेत्यादिभिः—यस्त्वा० ( तैत्ति० संहि० का० १ अ० ४ अन्तगोऽनुवाकः ) । तुभ्यमग्ने० ( ऋक्सं० अष्ट० ३ अ० ८ वर्ग १९ ) सोमो ददत्० ( ऋक्सं० अष्ट० ८ अ० ३ वर्ग २७ ) इत्यादयः पञ्च मिलित्वा सप्तभिर्ऋग्भिराहुतीर्हुत्वेत्यर्थः । शतसंख्यं साज्यं पायसं प्रजापते न त्वदिति ( ऋक्सं० अष्ट० ८ अ० ३ वर्ग २७ ऋक् १ ) मन्त्रेण प्रजापतिमुद्दिश्य जुहुयात् ।

वसिष्ठोक्तं पुत्रपरिग्रहविधिमाह—पुत्रं प्रतिग्रहीष्यन्निति । अदूरबान्धवमिति । अदूरः संनिहितः । बान्धवः—मातापितृसंबन्धी । सांनिध्यं च सगोत्रत्वेन स्वल्पपुरुषव्यवधानेन च । तथा चादूरबान्धव इत्यस्य सगोत्रसपिण्ड इत्यर्थः । सगोत्रसपिण्डालाभ आह—बन्धुसंनिकृष्टमिति । बन्धूनां सपिण्डानां संनिकृष्टः सपिण्डः सपिण्डसपिण्ड इत्यर्थः । स्वस्यासपिण्डः सोदक इति यावत् । सपिण्डालाभे सोदकमेव, न तु सगोत्रं ( पञ्चदशपुरुषमारभ्यैकविंशपुरुषावधिकं ) प्रतिगृह्णीयादि-

संदेह इति । दूरावस्थितबान्धवस्यात्यन्तदेशभाषादिविप्रकर्षादिना कुलशीलादिसंदेहः संभवत्येव । तथात्वे तन्निर्णयपर्यन्तं न व्यवहरेत्तत्र हेतुरेकेनेति । बहून् पित्रादीन् । एतदन्यतराविधिरावश्यकः । ततश्च शौनकः—

दक्षिणां गुरवे दद्याद्यथाशक्ति द्विजोत्तमः ।
नृपो राज्यार्धमेवाथ वैश्यो वित्तशतत्रयम् ॥
शूद्रः सर्वस्वमेवापि अशक्तश्चेद्यथाबलम् ।

राज्यार्धमर्धराज्योत्पन्नमेकवर्षीयद्रव्यम् । प्रदद्यादर्धराज्योत्थमेकवर्षाहृतं धनमिति वृद्धगौतमस्मरणात् । उत्तममध्यमाधमभेदेन वित्तानां सुवर्णरजतताम्राणामिति ज्ञेयम् ।

शतत्रयं नाणकानां सौवर्णमथ राजतम् ।

त्यर्थः । संदेह इतीति । दूरावस्थिता बान्धवा यस्यासौ गोत्रसापिण्ड्याभ्यामसंनिहितः । अत्यन्तविप्रकृष्टदेशभाषाभ्यां तस्य कुलशीलादिविषये संशये समनुप्राप्ते सति यावन्निर्णयं शूद्रमिव स्थापयेन्न व्यवहरेदित्यर्थः । यावन्निर्णयं व्यवहाराभावे कारणमाह—एकेनेति । एकेन हि विज्ञातेन पुत्रेण पितृपितामहादीन् बहून् पितॄंस्त्रायत इति पुत्रप्रतिग्रहार्थिकीर्षितः । न त्वेकेन बहवोऽधःपातं नेतव्याः । तथा च संदिग्धस्य परिग्रहे सति कदाचिदेकेन बहूनामधःपातः स्यादिति संभाव्यत इत्यतो यावन्निर्णयं तेन सह नैव सहाऽऽसनादिः कश्चिद्व्यवहारः करणीय इति भावः । शौनकवसिष्ठान्यतरप्रोक्तः परिग्रहविधिरवश्यं करणीयः । स च दत्तक्रीतकृत्रिमापविद्धस्वयंदत्तेषु पञ्चसु पुत्रेष्वावश्यकः । तेन विना तेषु पुत्रत्वोत्पत्त्ययोगात् । क्षेत्रजगूढकानीनसहोढपौनर्भवशौद्रेषु मातापित्रन्यतरावयवान्वयसत्त्वात्परिग्रहासंभवेन परिग्रहमन्तरेणापि पुत्रप्रतिनिधित्वसंभव इत्यादि दत्तकमीमांसाटीकायां मञ्जर्यां मत्कृतायां द्रष्टव्यम् ।

**दक्षिणां गुरव इत्यादि** । **द्विजोत्तम इति** । 'त्रयो वर्णा द्विजातयः' ( म० स्मृ० १० । ४ ) इति स्मृतेः क्षत्रियवैश्यव्यावृत्त्यर्थमुत्तमग्रहणम् । द्विजोत्तमो ब्राह्मण इति यावत् । ब्राह्मणेन यथाशक्ति गुरवे दक्षिणा देया । गुरुरत्राऽऽचार्यः । आचार्यं धर्मसंयुक्तं वैष्णवमित्युपक्रमात् । **अर्धराज्योत्पन्नमिति** । राज्यार्धमित्यस्यैवं व्याख्याने प्रमाणमाह—**प्रदद्यादिति** । नृपेणार्धराज्योत्पन्नमेकवर्षीयं द्रव्यं गुरुदक्षिणा देया । **वित्तानामिति** । उत्तमादिभेदेन भिन्नानां सुवर्णरजतताम्राणां त्रीणि शतानि स्वशक्त्यनुसारेण वैश्येन गुरुदक्षिणा देया । तत्र प्रमाणं दर्शयति—**शतत्रयमिति** । **सर्वस्वमिति** । एकस्मिन् वत्सरे भृत्या लब्धं सर्वं

पदद्यात्सोऽग्रमथवा उत्तमादिव्यवस्थया ॥

इति वृद्धगौतमस्मरणात् । सर्वस्वमेकवर्षभुक्तिलब्धमिति यावत् ।

तैत्तिरीयाणां तु विधिविशेषमाह बौधायनः—अथ पुत्रपरिग्रहविधिं व्याख्यास्यामः । प्रतिग्रहीष्यन्नुपकल्पयते, द्वे वाससी, कुण्डले अङ्गुलीयकमाचार्यं च वेदपारगं कुशमयं बर्हिः पर्णमयमिध्मामित्यथ बन्धूनाहूय निवेशनस्य मध्ये राजनि निवेद्य परिषदि वाऽगारमध्ये ब्राह्मणवागालम्बेनोपविश्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा यद्देवयजनोल्लेखनप्रभृति आप्रणीताभ्यः कृत्वा दातुः समक्षं गत्वा मे पुत्रं देहीति भिक्षेत ददानीतीतर आह । तं परिगृह्णाति धर्माय त्वा परिगृह्णामि संतत्यै त्वा परिगृह्णामि इत्यथैनं वस्त्रकुण्डलादिभिरलंकृत्य परिधानप्रभृत्यग्निमुखं कृत्वा पक्त्वा जुहोति यस्त्वा हृदा कीरिणा मन्यमान इति पुरोनुवाक्यामनूद्य यस्मै त्वं सुकृते जातवेद इति याज्यया जुहोत्यथ व्याहृतीर्हुत्वा स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानदक्षिणां ददाति । एते च वाससी एते कुण्डले एतच्चाङ्गुलीयकं च एवं त्वौरस उत्पद्यते तुरीयभागे संभवतीति आह स्म बौधायन इति ।

एवमुक्तविध्यभावे परिगृहीतस्य तु विवाहोचितधनमात्रभागित्वं न त्वंशभागित्वमिति वक्ष्यते ।

तथा मनुः—गोत्ररिक्थे जनयितुर्न हरेद्दत्त्रिमः सुतः ।

गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥ इति ।

एतेन दातृधने दानादेव पुत्रत्वनिवृत्तिद्वारा दत्त्रिमस्य स्वत्वनिवृत्तिर्दातृगोत्र-

---

द्रव्यमित्यर्थः । सैषा शूद्रेण गुरुदक्षिणा देया । नाणकमिति महाराष्ट्रभाषया ( मुद्राचिह्नितं स्वर्णनिष्कम् ) ‘मोहोर’ इत्युच्यते ।

तैत्तिरीयाणां पुत्रप्रतिग्रहविधिं बोधायनोक्तमाह—**अथ पुत्रेति** । **ब्राह्मणवागालम्बेनेति** । ब्राह्मणानामाशीर्वचनाश्रयेणेत्यर्थः । परिग्रहविधेरभावे सति गृहीतस्य नांशभागित्वं किंतु विवाहोचितधनभागित्वम् ।

**गोत्ररिक्थे इति** ( म० स्मृ० ९ । १४२ ) । दत्तकः पुत्रः स्वजनकपितुर्गोत्रं धनं च न भजते । गोत्ररिक्थानुसारी पिण्डोऽपि निवर्तते । जनकस्य श्राद्धमपि दत्तकेन न कार्यमिति यावत् । यस्य गोत्रं धनं च परिगृह्णाते तस्यैव पिण्डो दीयते । किमनेनोक्तं भवतीति जिज्ञासायामाह—**दातृधने दानादेवेति** । स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्तेर्दानार्थत्वाद्दानमहिम्नैव पुत्रत्वनिवृत्तिद्वारेण दत्तकस्य दातु-

निवृत्तिश्च भवतीत्युच्यते । तथा च गोत्रादिनिवृत्तेरेव दर्शनात्संस्कुर्यात्स्वसु-तानिपतेति स्मरणाद्ग्रहणानन्तरसंभाव्यमाना एव दत्तकस्य संस्काराः प्रतिग्रही-त्रा कार्या न पुनर्जनकेन कृतपूर्वा अपि निवर्तनीयाः । एवमेनः शमं याति बीजगर्भसमुद्भवमिति ।

चित्रं कर्म यथाऽनेकैरङ्गैरुन्मील्यते शनैः ।
ब्राह्मण्यमपि तद्वत्स्यात्संस्कारैर्विधिपूर्वकैः ॥

इति वचनबोधितस्य तत्तत्क्रियातो बीजादिदोषनाशस्य ब्राह्मण्याधानस्य च

---

जनकस्य धने स्वत्वनिवृत्तिर्जनकगोत्रनिवृत्तिश्च भवतीत्युच्यते । गोत्ररिक्थपिण्डानां निवृत्त्या पुत्रत्वनिवृत्तेः सूत्रनेन पुत्रत्वप्राप्तिप्रयोजकमेतत्त्रितयमित्यवगम्यते । ततश्च यत्सं-बन्धि गोत्रादित्रितयं निवृत्तं तन्निरूपितपुत्रत्वनिवृत्तावपि स्वस्वत्वापादकपरिग्रहविधिनैव दत्तकस्य प्रतिग्रहीतृगोत्ररिक्थहारित्वात्पिण्डदातृत्वाच्च प्रतिग्रहीतृनिरूपितपुत्रत्वं सिध्यति ।

ननु यदि दातुर्जनकस्य गोत्ररिक्थपिण्डा निवर्तन्ते तर्हि जनककृततत्सं-स्कारा अपि निवर्तेरन् । संस्काराणां जनकगोत्रेण निष्पन्नत्वादित्याशङ्कयाऽऽह—**गोत्रा-दिनिवृत्तेरेवेति** । 'गोत्ररिक्थ०' इति मनुना गोत्रादित्रयस्य निवृत्तिर्यथा स्पष्टं प्रतिपादिता न तथा गोत्रपूर्वककृतसंस्काराणां निवृत्तिरुक्तेति हेतोः संस्कारनिवृत्ति-कल्पने प्रमाणाभावेन 'संस्कुर्यात्स्वसुतान् पिता' इति स्मृत्यनुसाराद्दत्तकग्रहणादन-न्तरं कर्तव्यतया संभाविता एव संस्काराः प्रतिग्रहीत्राऽनुष्ठेयाः । नैव पुनर्जनकेन कृतानां संस्काराणां निवृत्तिं कृत्वा तेऽप्यनुष्ठेयाः । अत्रार्थे हेतुं निर्दिशन्नाह— **एवमेन इति** ( या० स्मृ० १ । ११३ ) । **बीजगर्भेति** । बीजं शुक्रशो-णिते । ते च स्वभावादशुचिनी । गर्भाधान्यपि दोषसंक्रान्त्या दुष्टैव । अतस्त-न्निमित्तमशुचित्वमिति मेधातिथिः । बीजं शुक्रशोणिते । तत्समुद्भवं तत्संबन्धि । निषिद्धकालमैथुनसंकल्पादिना बीजदोषजन्यं पापम् । गर्भो गर्भाशयः । तत्संबन्धि अशुचि मातृगर्भवासजं मातुर्व्यभिचारसंकल्पजं चेति राघवानन्दः । शुक्रशोणितसंबद्धं गात्रव्याधिसंक्रान्तिनिमित्तं च पापं नतु पतितोत्पन्नत्वादीति विज्ञानेश्वरः । एवं पूर्वोक्तैर्गर्भाधानादिभिः संस्कारैर्विधिपूर्वकमनुष्ठितैर्बीजगर्भसंबन्धि अशुचित्वमपत्यस्य शमं याति नाशं प्राप्नोतीति तदर्थः । तथा च संस्काराणामेवैनोनिबर्हणे प्रयोजकत्वेनैक-कर्तृकत्वस्याकिंचित्करत्वम् । देवलः—**चित्रं कर्मेति** । यथा नानाविधवर्णैरेकमालेख्यं निर्मीयते, आलेखिता त्वेको वाऽनेके वा भवन्तु तथाऽनेकैर्जातकर्मादिभिः संस्कारै-रेनोनिबर्हणं ब्राह्मण्याधानं च जायते । संस्कर्ता त्वेको वाऽनेके वा सन्तु न तत्र कियानपि निर्भरः । संस्काराश्च सर्वे तेन तेनानुष्ठिता इति विधिपूर्वकमनुष्ठितैस्तै-

जातत्वेन तदावृत्तौ प्रमाणाभावात् । अन्यथा—

अष्टौ संस्कारकर्माणि गर्भाधानमिव स्वयम् ।

पिता कुर्यात्तदन्यो वा तस्याभावेऽपि तत्क्रमात् ॥

एतेरुक्तप्रयोजनद्वयस्य जातत्वेन तेषां पुनरनुष्ठाने प्रमाणाभावादिति भावः । अन्यथेति । उक्तवैपरीत्ये । दातुर्जनकस्य गोत्ररिक्थादिनिवृत्त्या तत्कृतसंस्काराणामपि निवृत्तावङ्गीक्रियमाणायां सत्यामित्यर्थः । अष्टौ संस्कारकर्माणीति । गर्भाधानमृतौ पुंसः सवनं स्यन्दनात्पुरा । षष्ठेऽष्टमे वा सीमन्तः प्रसवे जातकर्म च । अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः । षष्ठेऽन्नप्राशनं नाम चूडा कार्या यथाकुलम् ( या० स्मृ० १ । ११—१२ ) । इत्युक्ताष्ट कर्माणीत्यर्थः । एतेऽष्टौ संस्काराः पित्रा स्वयं कार्याः । पित्रभावे देशान्तरगमनादिनेति शेषः । देवरेण तत्कुलीयेनान्येन वा कार्या इति तदर्थः । तत्र पुंसवनसीमन्तोन्नयने गर्भाधानवत्क्षेत्रसंस्कारद्वाराऽपत्यसंस्कारौ । क्षेत्रसंस्कारश्च प्रथमगर्भ एव जात इति न गर्भाधानादित्रयं प्रतिगर्भमावर्तनीयम् । आरम्भणीयेष्टिन्यायात् । अत एव 'सकृच्च कृतसंस्काराः सीमन्तेन द्विजस्त्रियः । यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत्' ॥ इति हारीतोक्तिः संगच्छते ।

ननु सीमन्तेन द्विजस्त्रिय इत्युक्तेः सीमन्तोन्नयनांशे युक्तमिदं प्रतिगर्भमनावर्तनम् । पुंसवनांशे तु न युक्तम् । 'आवर्तेत इदं कर्म प्रतिगर्भमिति स्थितिः' इति बह्वृचकारिकायामुक्तत्वात् । पुमांसं जनयतीति फलस्य सूत्रकारेणैवोपदिष्टत्वाच्चेति चेन्न । 'एष वा अनृणो यः पुत्री' इत्यादिवचनैः सकृदपि पुत्रोत्पादनस्यावश्यकर्तव्यत्वात्तदङ्गं पुंसवनं प्रथमगर्भे कार्यमेव । तदनन्तरमुक्तसूत्राद्यत्र यत्र पुत्रेच्छा तत्र कार्यं नान्यत्र । यस्य तु कन्ये[illegible] सकृदपि नेति तात्पर्यादिति 'गर्भाधानमृतौ पुंसः' ( या० [illegible] । ११—१२ ) इत्यत्र मिताक्षराटीकायां बाळंभट्टयाम् । जातकर्मादि तु [illegible]पत्यसंस्कारकमिति प्रत्यपत्यमावर्तनीयम् ।

जैमिनीयन्यायमालायां नवमाध्यायस्य प्रथमे पाद आरम्भणीयान्याय एवं चिन्तितः— आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमानः' इति विहितेयमारम्भणीयेष्टिर्दर्शपूर्णमासयोर्यावज्जीविका[illegible]र्त्यमानयोः प्रतिप्रयोगमावर्तनीया । कुतः । प्रयाजादिवदङ्गत्वादिति चेत् । नैतद्युक्तम् । कुतः । सर्वप्रयोगसाधारणत्वात् । 'यावज्जीवं मया दर्शपूर्णमासौ कर्तव्यौ' इत्यध्यवसाय आरम्भः । स चैक एव । तेन चाऽऽरम्भेण प्रयुक्तेयमिष्टिः । तस्मान्नाऽऽवर्तनीया । यथा—आधानं

इत्यनेन पुंसवनसीमन्तोन्नयनयोरपि करणापत्तेः । तच्चायुक्तम् । असांप्रदायिकत्वात् । किंच ग्रहणानन्तरमेव पितृत्वेन संस्काराधिकारात्तत्पूर्वभाविषु संस्कारेषु प्रतिग्रहीतुरनधिकार एवाऽऽयाति । कालाभावात् । यदि च तत्पूर्व-

सर्वक्रतुसाधारणत्वात्सकृदेव कर्तव्यं भवति तद्वदिति । तदुक्तं जैमिनीयदर्शने—सकृद्वाऽऽरम्भसंयोगादेकः पुनरारम्भो यावज्जीवप्रयोगात् ( जै० सू० ५ । १ । १३५ ) इति । एवं सति यदि जनकपितृकृतसंस्काराणां निवृत्तिं कृत्वा पालकपित्रा पुनः क्रियेरंस्तर्हि पुंसवनसीमन्तोन्नयनयोरप्यावृत्त्यापत्तेः । न चेष्टापत्तिः । आरम्भणीयान्यायविरुद्धत्वात् । एतदाशयेनोक्तम्—तच्चायुक्तम् । तत्पुंसवनसीमन्तयोः पुनरनुष्ठानमयुक्तम् । असांप्रदायिकत्वादिति । याज्ञिकसंप्रदायप्रवर्तकाचार्यैर्निरुक्तसंस्कारयोः पुनरनुष्ठानस्य न्यायविरुद्धत्वेनानङ्गीकारादित्यर्थः ।

अपि च दत्तकपुत्रस्य विधिना ग्रहणादनन्तरं प्रतिग्रहीतुः पितृत्वप्राप्त्या पुत्रसंस्कारकरणाधिकारः प्राप्नोति । नार्वाक् । ततश्च पुत्रीकरणात्प्राग्भाविनो ये संस्कारास्तदनुष्ठाने प्रतिग्रहीतुरधिकार एव नास्तीत्यायाति ।

ननु जातकर्माद्युक्तकाले पुत्रप्रतिग्रहाभावेन प्रतिग्रहीतुः पितृत्वाभावात्तत्काले निरुक्तसंस्कारानुष्ठाने प्रतिग्रहीतुरधिकारो मा भून्नाम । किंत्विदानीं पितृत्वप्राप्त्या प्रतिग्रहीतुरधिकारः प्राप्नोतीत्यत आह—कालाभावादिति । जातकर्मादिसंस्कारोक्तमुख्यकालाभावादित्यर्थः । यदा च जातकर्मादेर्मुख्यकाल आसीत्तदा प्रतिग्रहाभावेन प्रतिग्रहीतुः पितृत्वं नाऽऽसीत् । यदा च प्रतिग्रहीतुः पितृत्वं संपन्नं वर्षत्रयादूर्ध्वं तदा जातकर्मादेर्विहितकालो नास्तीत्यर्थः । अनेनैतद्दर्शयति—यत्तत्कर्मणो मुख्यकालस्य शास्त्रोक्तस्य तत्तत्कर्मकर्तुश्चेति द्वयोर्युगपत्समवधानसंभावनायामेव तत्कालविहितकर्मणः सोऽधिकारी भवति नान्यथेति । जातकर्मादेश्चूडान्तस्य मुख्यकालो जन्मनः प्रभृति तृतीयवर्षसमाप्तिपर्यन्तः । तत्कर्मकर्ता च दत्तकस्थले पालकपिता । प्रतिग्रहीतेत्यर्थः । दत्तकप्रतिग्रहश्च वर्षत्रयादूर्ध्वं पञ्चमवर्षान्तः । ततश्च चूडान्तकर्मणो मुख्यकाले पितृत्वमेव नास्ति । तदानीं प्रतिग्रहाभावात् । यदा च पञ्चमवर्षे पुत्रप्रतिग्रहस्तदानीं पितृत्वप्राप्तावपि मुख्यकालो नास्ति । एवं च चूडान्तस्य कर्मणो मुख्यकालस्य तत्कर्तुः पालकपितुश्च न कथमपि युगपत्समवधानसंभव इति प्रतिग्रहीतुः प्रतिग्रहप्राक्कालभाविजातकर्मादेरधिकारो नास्तीत्याशयः ।

ननु यद्यपि प्रतिग्रहसमये जातकर्मादेर्मुख्यकालो नास्ति तथाऽपि ‘ स्वकालादुत्तरः कालो गौणः सर्वः प्रकीर्तितः ’ इति स्मृतेः ‘ तृतीये वर्षे चूडाकर्म पञ्चमे वा ’ इति शङ्खलिखितवचनादुपनीत्या सह करणवचनाच्च जातकर्मादेश्चू-

भाविनोऽपि संस्कारा जनकेन न कृतास्तदा बीजगर्भदोषनाशावश्यकत्वेन क्रमा-

ङान्तस्य गौणकालोऽस्तीति कथमुच्यते प्रतिग्रहप्राक्कालभाविसंस्कारविषये प्रतिग्रहीतुरधिकारो नास्तीति चेद्भ्रान्तोऽसि । यस्यैव हि मुख्यकाले यत्कर्माधिकारोऽस्ति तस्यैव च गौणकाले तत्कर्माधिकारः संभवतीति नियमात् । मुख्यकाले यः कर्माधिकारी तमुद्दिश्यैव तत्कर्मणो गौणकालाभिधानात् । यथा 'पितैवोपनयेत्पुत्रम्' इति पुत्रोपनयने पितुरधिकारः प्रतिपादितः । स च न स्वातन्त्र्येण यस्मिन्कस्मिन्नपि कालेऽपि तु 'गर्भाष्टमेऽब्दे कुर्वीत' इत्युक्ताष्टमाब्दरूपकालविशेषपारतन्त्र्येणैवाभिहितः । अन्यथा 'गर्भाष्टमेऽब्दे' इति कालविधानमपार्थकमेव स्यात् । तदानीं पितृत्वसद्भावेन तत्कर्मणो मुख्यकालकर्त्रोर्युगपत्समवधानसंभवाज्जनकपितुर्मुख्यकाले सुतोपनयनाधिकारो भवत्येव । अथ सोऽधिकारी पिता यदि केनचित्कारणेन मुख्यकाले स्वसुतमुपनेतुं न शक्नोति तदा 'आषोडशाद्ब्राह्मणस्यानतीतः कालः' इति षोडशवर्षपर्यन्तं गौणकालोऽभ्यनुज्ञायते । स च मुख्यकाले योऽधिकारी तं प्रत्येवानुज्ञात इति यस्यैव मुख्यकालेऽधिकारस्तस्यैव गौणकालेऽधिकार इत्येवं नियमः सिद्धः । सोऽयं मुख्याधिकारी प्रवासगतत्वादिना यदि मुख्यकाले संनिहितो भवितुं नार्हति तदा 'तदभावे पितुः पिता' इति पितामहस्तदधिकारित्वेनाभिहितः । सोऽयं गौणाधिकारीत्युच्यते । मुख्याधिकार्यभावेऽस्य विधानात् । गौणाधिकार्यपि मुख्यकाले गौणकाले चोपनेतुं शक्नोतीति मुख्याधिकारिवदुभयकालेऽधिकारी भवति । नैवं पालकपितेति गौणमुख्याधिकारिविलक्षणत्वान्न कथमपि प्रतिग्रहीतुः प्रतिग्रहप्राक्कालभाविजातकर्मादिरधिकार इति जातसंस्काराणां नाऽऽवृत्तिरिति बोध्यम् ।

यदि तु जातादिचूडान्ताः संस्काराः स्वकाले जनकेन न कृताः स्युश्चेत्तदा बीजगर्भदोषनाशार्थं प्रतिग्रहोत्तरभाविप्राप्तकालसंस्कारसिद्ध्यर्थं च प्रतिग्रहीत्रैव ते करणीया इत्याह—**यदि चेति** । **बीजगर्भदोषनाशावश्यकत्वेनेति** । जनकेन तेषां संस्काराणामकरणाद्दोषाणामनपगमात्तदपगमार्थं तत्करणस्याऽऽवश्यकत्वादित्यर्थः । **क्रमानुरोधेन चेति** । यथा 'जलबिन्दुनिपातेन क्रमशः पूर्यते घटः' तथा जातकर्मादितत्तत्संस्कारकर्मानुष्ठानेन क्रमशः परिपूर्णं ब्राह्मण्यं निष्पद्यते । ततश्च परिपूर्णब्राह्मण्याभिनिष्पत्त्यर्थं यथाक्रमं तदनुष्ठानानुरोधेन चेत्यर्थः । अथवा तत्पूर्वसंस्कारं विना तदुत्तरसंस्कारार्हताया अभावेन तदनुरोधेनापि जातकर्मादिरनुष्ठानस्याऽऽवश्यकत्वाच्चेत्यर्थः । समाधेया अनुष्ठेया इत्यर्थः । 'येषां तु न कृताः पित्रा संस्कारविधयः क्रमात् । कर्तव्या भ्रातृभिस्तेषां पैतृकादेव तद्धनात्' इति स्मृतेरित्यर्थः । पुत्रप्रतिग्रहानन्तरं प्राप्तकालानामुपनयनादिसंस्काराणामनुष्ठानाधिकारः

नुरोधेन च प्रतिग्रहीत्रैव ते समाधेयाः । एवं चोपनयनमात्रकरणेऽपि प्रतिग्रही-
तुर्दत्तकपुत्रसिद्धिः ।

अन्यशाखोद्भवो दत्तः पुत्रश्चैवोपनायितः ।
स्वगोत्रेण स्वशाखोक्तविधिना स स्वशाखभाक् ॥

पितृत्वप्राप्त्या प्रतिग्रहीतुः संप्राप्तः । जनकेन च प्रतिग्रहप्राक्कालभाविनो जातकर्मादयः संस्कारा दैवान्मानुषाद्वाऽपराधान्नानुष्ठिताः । दानेन च दत्तकस्य जनकपितृगोत्ररिक्थादिना संबन्धाभावाज्जनककुलीयभ्रातृणामपि दत्तकस्य जातकर्मादिसंस्कारकरणेऽधिकारो नास्ति । नास्ति च पूर्वसंस्कारानुष्ठानं विनोत्तरसंस्कारानुष्ठानयोग्यता । ततश्च प्रतिग्रहीतुः प्राप्तोऽप्युपनयनाद्यधिकारः पूर्वसंस्काराभावेनाकिंचित्करः स्यात् । अतः प्राप्ताधिकारसाफल्याय च प्रतिग्रहीत्रैव ते करणीया इति भावः । इदं च जनकेन पित्राऽकृतानां जातकर्मादिचूडान्तसंस्काराणां प्रतिग्रहीत्रा करणमसमाप्ततृतीयवर्षस्य परिग्रहे सति वेदितव्यम् । तथा सति चूडाया मुख्यकाले तृतीयवर्षे पितृत्वप्राप्त्या तन्मुख्यकालकर्त्रोर्युगपत्सत्त्वसंभवेन प्रतिग्रहीतुश्चूडान्तकर्मण्यधिकारस्य सुवचत्वात् । एवमकृतचूडामात्रस्य परिग्रहेऽपि बोध्यम् । अन्यथा तृतीयवर्षोर्ध्वं परिग्रहेण मुख्यकाले पितृत्वप्राप्त्यभावान्मुख्यकालकर्त्रोर्युगपत्सत्त्वात्यन्तासंभवेन मुख्यकालेऽधिकाराभावाद्गौणकालेऽप्यनधिकारेण प्रतिग्रहीतुस्तदननुष्ठानस्यैव प्राप्तेः । नन्वेवं तृतीयवर्षोर्ध्वमुपनयनात्प्राक् परिगृहीतस्याकृतचूडस्य सकलशिष्टानुमोदितो यः पुत्रत्वव्यवहारस्तस्य का गतिरिति चेत्प्रसङ्गतोऽग्रे निरूपयिष्यते ‘ चूडायां गौणकालादरस्तु वचनबलादेवेति ग्रन्थेन । **एवं चेति** । गर्भाधानादिचूडान्तानामष्टानां संस्काराणां जनकपित्रा स्वकाले कृतानामपुनरावृत्तौ सिद्धायां चेत्यर्थः । किं सिध्यति तदाह— **उपनयनमात्रेति** । प्रतिग्रहानन्तरं प्रतिग्रहीत्रा दत्तकस्य केवलमुपनयनसंस्कारकरणेऽपि दत्तकपुत्रः सिध्यति । केवलशब्देनोपनयनात्पूर्वेषां जातकर्मादिचूडान्तसंस्काराणां व्यावृत्तिर्न तूत्तरेषाम् । प्रतिग्रहीत्रोपनयनसंस्कारमात्रस्य करणेऽपि गृहीते प्रतिग्रहीतृनिरूपितं पुत्रत्वमुत्पद्यत इति यावत् । अत्रार्थे वसिष्ठं प्रमाणयति—**अन्यशाखोद्भव इति** । प्रतिग्रहीतुर्या शाखा तदपेक्षया भिन्ना शाखा कर्मकाण्डीयवेदो यस्य तादृशकुलोद्भवो दत्तकः पुत्रः प्रतिग्रहीत्रा स्वशाखोक्तविधिना स्वगोत्रेणोपनीतः । अथवा धातूनामनेकार्थत्वादुपनायितः संस्कृत इति वाऽर्थः । स्वस्य प्रतिग्रहीतुः शाखा यस्मिन्कर्मणि तत्स्वशाखं कर्म । तद्भजतीति स्वशाखभाक् । प्रतिग्रहीतृशाखीयो भवतीत्यर्थः । अत्र प्रतिग्रहीत्रोपनयनसंस्कारे कृतेऽन्यशाखीयस्य दत्तकस्य स्वशाखीयत्वप्रतिपादनात्स्वशाखीयत्वस्य च स्वपुत्रत्वं विनाऽनुचितत्वात्प्रतिगृहीत उपनयनसंस्का-

इति वसिष्ठस्मरणात् । एतच्चाष्टमाब्दरूपतन्मुख्यकालाभ्यन्तर्वर्तिपरिग्रहे बोध्यम् । अन्यथा मुख्यकालेऽधिकारयोग्यत्वाभावे गौणकालेऽनधिकाराच्च तरिस-

रेण पुत्रत्वमप्यभ्युपेतमिति प्रतीयते । अयं भावः । यदि च जातकर्मादिसंस्कारानन्तरेण केवलदत्तकप्रतिग्रहविधिना प्रतिगृहीत दत्तकपुत्रत्वं सिध्येत्तर्ह्युपनायित इति विशेषणमदत्त्वैवान्यशाखोद्भवो दत्तः पुत्रः प्रतिग्रहीतृशाखभाग्भवतीत्येव वदेत् । यतश्चोपनायित इत्यनेन दत्तकं विशेषयति ततोऽवगच्छति वसिष्ठो यद्दत्तकपुत्रत्वं न केवलप्रतिग्रहविधिसाध्यमपि तु संस्कारसापेक्षमपीत्यवगम्यते । संस्कारसापेक्षत्वेऽपि यदि जातकर्माद्यखिलसंस्काराणामावश्यकत्वमभीष्टं स्यात्तदा ‘ अन्यशाखोद्भवो दत्तः पुत्रो जातादिसंस्कृतः ’ इत्येवं जातादिसंस्कारानुल्लिखेत् । सत्येवं यत्संस्कारविशेषमुपनयनं निर्दिशति तेनोपनयनात्प्राग्भाविनां जातादीनामुत्तरभाविनां च समावर्तनादीनां नाऽऽवश्यकत्वमित्यवगमयतीति । तत्रोत्तरभाविनः कृताः सन्तो न साधका नाप्यकृताः सन्तो बाधकाः । पूर्वभाविनस्तु जनकेन कृताश्चेत्तस्युस्तर्हि नाऽऽवश्यकाः । अकृताश्चेदावश्यका एवेति बोध्यम् ।

यद्यपि परिग्रहविधिबलादेव तत्र प्रतिग्रहीतृनिरूपितपुत्रत्वं सिद्धं तथाऽप्यपरिपूर्णत्वान्न तद्दृढम् । प्रतिग्रहीत्रोपनयने कृते तु परिपूर्णत्वाद्वाद्विर्बद्धं सुबद्धं भवतीति न्यायात्तद्दृढं भवतीत्युक्तमुपनयनेन पुत्रत्वमुत्पद्यत इति । परिग्रहविध्युपनयनरूपाभ्यां पूर्वोत्तराङ्गाभ्यां सिध्यत्पुत्रत्वं परिपूर्णत्वाद्दृढं भवतीत्यर्थः । यथा केनचिद्धनिना दात्रा मद्द्रव्यराश्यन्तर्गत एतावान् द्रव्यांशोऽमुष्यै संस्थायै दत्तोऽयं च द्रव्यविभाग एतस्यै संस्थायै दत्त इत्येवं स्वहस्तेन समर्पणपत्रे लिखिते तावतैवामुष्याः संस्थाया एतावान् द्रव्यांशोऽयं चैतस्या इत्यर्थः सिद्धस्तथाऽपि यावत्तेन दात्रा तस्मिन्पत्रे स्वहस्ताक्षरी न क्रियते तावत्केवललेखात्सिद्धमपि तमर्थमपरिपूर्णत्वाददृढं न मन्यते जनः । हस्ताक्षर्यां कृतायां तु परिपूर्णत्वाद्दृढं मन्यते । तद्वत्परिग्रहविधिवशात्सिद्धं दत्तकपुत्रत्वमुपनयनेन शास्त्रीयं भवतीति भावः ।

ननु भिन्नगोत्रीयस्य दत्तकस्योपनयनमात्रकरणेन पुत्रत्वं सिध्यतीति चेद्द्वादशवर्षदघ्नस्य पुत्रीकरणेऽप्युपनयनमात्रेण पुत्रत्वं सिध्येदत आह—एतच्चेति । वसिष्ठोक्तमुपनयनसंस्कारमात्रकरणेनान्यशाखीयस्य गृहीतस्य दत्तकपुत्रत्वसिद्धिविधानं च गर्भाष्टमाब्दादिरूपो य उपनयनस्य मुख्यः कालस्तादृशकालाभ्यन्तरवर्तिन एव पुत्रस्य ग्रहणे सति वेदितव्यम् । तेनातीताष्टमवर्षस्य पुत्रस्य परिग्रहे सति तत्र दत्तकपुत्रत्वं न सिध्यति । यत्कारणं यस्य मुख्यकाले तत्कर्मकरणाधिकारो नास्ति तस्य गौणकालेऽपि तत्कर्माधिकारो न भवतीति । यद्वा चोपनयनस्य मुख्यकालोऽष्टमाब्द

आसीत्तदा प्रतिग्रहाभावेन प्रतिग्रहीतुः पितृत्वं नाभूत् । यदा च द्वादशवर्षादौ परिग्रहेण पितृत्वं संपन्नं न तदोपनयनस्याष्टमाब्दरूपो मुख्यः काल इति तन्मुख्य-कालकर्त्रोर्युगपत्समवधानात्यन्तासंभवेन नास्ति प्रतिग्रहीतुरुपनयनाधिकारः । नास्ति च प्रतिग्रहीतृकर्तृकोपनयनसंस्कारमन्तरेण विना परिगृहीतेऽपि दत्तकपुत्रत्वसिद्धि-रित्यर्थः ।

एवं चोपनयनात्प्रागष्टमवर्षान्तः पुत्रपरिग्रहकाल इति प्रदर्शितम् । तथा हि व-सिष्ठेन प्रतिग्रहीतृकर्तृकोपनयनसंस्कारेण दत्तकपुत्रत्वसिद्ध्यभिधानादकृतोपनयनो ग्राह्यः प्रतीयते । उपनयने च ' गर्भाष्टमेऽष्टमे वाऽब्दे ' ( या० स्मृ० १ । १४ ) इति याज्ञवल्क्येन गर्भाधानसमयाज्जन्मसमयाद्वाऽऽरभ्याष्टमो वर्षो यद्यप्युक्तस्तथाऽपि गर्भाष्टमस्य प्रथममभिहितत्वान्मुख्यः स्यात्प्रथमः कल्प इति न्यायेन गर्भाष्टमाब्दो ब्राह्मणोपनयनस्य मुख्यः कालः । स च मासत्रयाधिकः सप्तमोऽब्दः । यथा कस्यचिदेकषष्ट्युत्तराष्टादशमिते ( १८६१ ) शाके संवत्सरे चैत्रशुक्लप्रतिपदि जन्माभूत् । तस्य श० ( १८६८ ) मितश्चैत्रादिफाल्गुनान्तः संवत्सरो जन्मत-तोऽष्टमोऽब्दः । तस्यैव गर्भाष्टमोऽब्दः श० ( १८६८ ) गतज्येष्ठमासान्तः । अयं भावः । श० ( १८६१ ) चैत्रशुक्लप्रतिपदि जन्म जातं चेत्स मासो गर्भा-धानसमयाद्दशमो बोध्यः । ' दशमे मासि सूतवे ' इति श्रुतेः । तस्माद्दशममा-सात्प्राक् फाल्गुनः प्रथमो माघो द्वितीयः पौषस्तृतीय इत्येवं पूर्वपूर्वमासगणनया नवमो मासो गर्भाधानसमयः । स च श० ( १८६० ) वत्सरान्तर्गत आषा-ढमासः । ततश्च श० ( १८६७ ) वत्सरगतमाषाढमारभ्य श० ( १८६८ ) वत्सरगतज्येष्ठमासान्तो वत्सरो मासत्रयाधिकसप्तमाब्दरूपो गर्भाष्टमाब्दशब्दवाच्यः संपद्यते । एवं च जन्मन आरभ्योपनयनमुख्यकालसमाप्तिपर्यन्तं दत्तकपुत्रग्रहणकाल इत्युक्तं भवति । अत्राकृतोपनयन इत्युक्त्या जनककृतोपनयनस्याष्टमवर्षे गृहीतस्यापि न पुत्रत्वं सिध्यति । मुख्यकाले परिग्रहेण पितृत्वप्राप्त्या प्रतिग्रहीतुरुपनयनकरणा-धिकारसत्त्वेऽपि गृहीतस्य पुत्रस्यानुभूततदवस्थात्वेनोपनयनसंस्कारार्हत्वाभावेनोपनयनस्य कर्तुमशक्यत्वेन प्रतिग्रहीतृकर्तृकोपनयनसंस्कृतत्वाभावात् ।

अत्रेदं चिन्त्यम्—यदियं वसिष्ठेनोपनयनात्प्रागष्टमवर्षे गृहीतस्य दत्तकपुत्रत्व-सिद्धिरुक्ता सा किं जनककृतचूडान्तसंस्कारस्याथवा जनकाकृतचूडान्तसंस्कारस्येति । तत्र न द्वितीयः । अकृतचूडान्तसंस्कारस्याकृतचूडामात्रस्य वाऽष्टमवर्षीयस्य परिग्रहे सति चूडाया मुख्यकाले तृतीयवर्षे परिग्रहाभावेन पितृत्वाप्राप्त्या मुख्यकालेऽधिका-राभावेन गौणकालेऽप्यनधिकारेण पूर्वसंस्कारस्योत्तरसंस्कारं प्रति कारणत्वात्कारणाभावे

द्धिरिति । अत्र च जनकप्रतिग्रहीत्रोरुभयोरपि पुत्राभिसंधाने सति दत्तकस्य द्व्यामुष्यायणत्वेनोभयगोत्रभागित्वम् । विशेषो वक्ष्यते । यत्तु पुराणनाम्ना पठन्ति—

पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते ।
आचूडान्तं न पुत्रः स पुत्रतां याति चान्यतः ॥
चूडाद्या यदि संस्कारा निजगोत्रेण वै कृताः ।
दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते ॥

---

च कार्याभावस्य प्रसिद्धत्वाच्चूडाया अभावे तदुत्तरस्योपनयनस्याप्यभावेन प्रतिग्रहीतृकर्तृकोपनयनसंस्काराभावाद्गृहीते पुत्रत्वोपपादनस्य दुर्वचत्वात् । जनकेन कृतचूडान्तसंस्कारस्याष्टमवर्षे परिग्रहे तूपनयनस्य मुख्यकालेऽष्टमाब्दे पितृत्वप्राप्तेर्मुख्यकालकर्त्रोर्युगपत्समवस्थानसंभवेनोपनयनसंस्कारयोग्यताकारणीभूतचूडासंस्कारस्य जातत्वेन च प्रतिग्रहीत्रोपनयनसंस्कारमात्रे कृते परिगृहीते दत्तकपुत्रत्वसिद्धिरुपपद्यते । तस्मात्प्रथमः पक्षः परिशिष्यते । चूडाया मुख्यकालेऽधिकाराभावेऽपि गौणकाले चूडाधिकारो भवत्येवेत्यग्रे वक्ष्यमाणत्वेन परिगृहीते पुत्रत्वोपपत्तेर्द्वितीयपक्षोऽपि सुवच एवेति ज्ञेयम् ।

तदयं संग्रहः—जातमात्रं पुत्रं परिगृह्य प्रतिग्रहीत्रा जातकर्मादयः सर्वे संस्काराः करणीयाः । जातमात्रस्य परिग्रहासंभवे सर्वथाऽकृतसंस्कारमकृतचूडामात्रं वा पुत्रं तृतीयवर्षसमाप्तिपर्यन्तं गृहीत्वा प्रतिग्रहीत्रा जाताद्यश्च चूडादयो वा संस्काराः कार्याः । कृतचूडान्तसंस्कारं तूपनयनात्प्रागष्टमवर्षसमाप्तिपर्यन्तं परिगृह्य प्रतिग्रहीत्रोपनयनमात्रं कार्यम् । एवं निरुक्तरीत्या विधिवत्प्रतिगृहीते संस्कारकरणेन पुत्रत्वं सिध्यतीति ।

अत्र चेति । दत्तकपुत्रे च जनकपालकयोरुभयोरपि पित्रोः ‘ आवयोरयं पुत्रः ’ इत्येवं संकल्पे सति तादृशदत्तकस्य द्विपितृकत्वेनोभयगोत्रसंबन्धो भवति । एतद्विषयको विशेषस्त्वग्रे निरूपयिष्यते ।

नन्वेवं कृतचूडान्तसंस्कारस्य परिग्रहे सति ममायमित्युभयोः प्रतिसंधाने च सति तादृशस्यापि दत्तकस्य गोत्रद्वयभागित्वं प्राप्नोति । तच्चायुक्तम् । तथाऽष्टमवर्षे परिगृहीतस्य यदुपनयनमात्रेण पुत्रत्वमित्याद्युक्तं तदप्ययुक्तं पितुर्गोत्रेणेत्यादिवचनविरोधादित्याशङ्क्य तत्खण्डयितुमनुवदति—यत्त्वित्यादिना । **पितुर्गोत्रेणेति** । यः पुत्रः पितुर्जनकस्य गोत्रेण चूडान्तसंस्कारैः संस्कृतः सोऽन्यस्य प्रतिग्रहीतुः पुत्रतां न याति, किंतु जनकपितुरेव स पुत्र इति तदर्थः । **चूडाद्या यदीति** । यदि चूडाप्रभृतयः संस्काराः प्रतिग्रहीतृगोत्रेण कृतास्तदैव दत्तक्रीतादयः प्रतिग्रहीतुः पुत्रा भवेयुः ।

यदि स्यात्कृतसंस्कारो यदि वाऽतीतशैशवः ।

---

अन्यथा ते दासा उच्यन्ते, इत्यस्यार्थः । दत्तक्रीतकृत्रिमापविद्धस्वयंदत्ताः पञ्च दत्ताद्याः । यदि स्यादिति । अन्यथा दास उच्यत इत्युक्तदासताहेतोरन्यथात्वस्यैव विवरणमनेन क्रियते । यदि जनकगोत्रेण कृतचूडान्तसंस्कारः स्याद्यदि वाऽकृतचूडोऽप्यतीतशैशवोऽतीतचूडाकालः स्यात्तदा दासा उच्यते । अर्थात्तादृशः पुत्रो न ग्राह्यो भवति । यद्यकृतचूडोऽतीततत्कालो गृह्येत तदा पञ्चमवर्षात्प्राग्ग्राह्यः पुत्रेष्टिश्च कार्या । अकृतचूडस्यातीतकालस्य पञ्चमाब्दात्पूर्वं पुत्रेष्टिपूर्वकं संग्रहणं कर्तव्यमिति तदर्थः ।

अत्र पितुर्गोत्रेणेति प्रथमवचनेन जनकगोत्रेण जातकर्मादिचूडान्तसंस्कारसंस्कृतस्य प्रतिग्रहीतृनिरूपितपुत्रतानिषेधात्प्रतिग्रहीत्रैव जाताद्यः संस्काराः कर्तव्या भवन्ति । कृतेषु च तेषु परिगृहीतो दत्तकः सिद्धो भवतीति प्रतीयते । अर्थाज्जातमात्रस्य परिग्रहः कर्तव्य इति परिगृहीते च तस्मिन्न केवलं परिग्रहविधिना पुत्रत्वमुत्पद्यते, किंतु जातादिचूडान्तसंस्कारानुष्ठानसहकृतेनेति जातादिचूडान्तसंस्काराणां पुत्रत्वोत्पत्तिहेतुत्वमिति चोक्तं भवति । चूडाद्या इति द्वितीयवचनेन तु प्रतिग्रहीत्रा चूडाप्रभृतिसंस्कारकरण एव दत्तादिषु पुत्रत्वाभिधानाज्जाताद्यन्नप्राशनान्तसंस्काराणां जनकेन कृतत्वेऽपि न क्षतिरित्यवगम्यते । चूडा आद्या येषामिति चूडाद्या इति पदस्य बहुव्रीहित्वात् । चूडाया आद्या इति षष्ठीतत्पुरुषे तु ‘ पितुर्गोत्रेण ’ इति वचनेन पुनरुक्तता स्यात् । तेन हि जातादिचूडान्तसंस्काराणां प्रतिग्रहीतृकर्तृकतायाः सूचनात् । तथा च जातमात्रालाभेऽकृतचूडो ग्राह्यः । अकृतचूडश्च द्विविधः । कृतजाताद्यन्नान्तसंस्कारोऽकृतजाताद्यन्नान्तसंस्कारश्च । अनुभूततत्पूर्वावस्थोऽननुभूततत्पूर्वावस्थश्चेति यावत् । अनुभूता तत्पूर्वावस्था तस्याश्चूडायाः पूर्वावस्था जाताद्यन्नान्तसंस्कारावस्था येनेत्यर्थः । एवमेवाननुभूतेत्यत्र विग्रहो बोध्यः । नञ्समासस्त्वधिकः । द्विविधोऽपि स संयोगवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वेनावत्साऽऽनीयतामित्यत्र धेन्वानयनवत्तृतीये वर्षे ग्राह्यो भवति । ‘ तृतीये वर्षे चूडाकर्म ’ इति शङ्खलिखितवचनात्तृतीयवर्षस्य चूडामुख्यकालत्वावगमात् । ततश्चाकृतचूडं तृतीयवर्षे गृहीत्वा चूडाप्रभृतिसंस्कारकरणेन तत्र पुत्रत्वं सिध्यतीत्युक्तं भवति । यदि स्यादिति तृतीयवचनपूर्वार्धेन च ‘ अन्यथा दास उच्यते ’ इति द्वितीयश्लोकस्थचतुर्थचरणार्थो व्याख्यातः । कृतसंस्कार इत्यादि । तथा हि—चूडाद्या इति पूर्ववचने प्रतिग्रहीत्रा चूडाप्रभृतयः संस्कारा यदि स्वगोत्रेण कृतास्तदैव दत्ताद्याः प्रतिग्रहीतृपुत्रतां यान्तीत्यभिधानाद्दत्तकपुत्रत्वसिद्धिहेतुत्वेनोक्तानां प्रतिग्रहीतृकर्तृकसंस्काराणां

ग्रहणे पञ्चमाद्वर्षात्पुत्रेष्टिं प्रथमं चरेत् ॥ इति ।

मध्ये प्राथम्यानुसरणेन अतीतस्य चूडासंस्कारस्थाने परामर्शोत्कृतसंस्कार इत्यस्य कृतचूड इत्यर्थः । अस्य जनकत्वादिः । शिशुत्वस्य कालकृतावस्थाविशेषत्वाच्छैशवपदेन शिशुत्वप्रयोजककाल उच्यते । स चात्र प्रकरणाच्चूडाकाल इत्यतीतशैशव इत्यस्यातीतचूडाकाल इत्यर्थः । तथा च यदि जिघृक्षितः पुत्रो जनकेन कृतचूडः स्यादथवाऽकृतचूडोऽप्यतीततत्कालः स्यात्तदा परिगृहीतोऽपि स प्रतिग्रहीतुर्दासो भवति न पुत्र इति । अर्थात्तादृशो न ग्राह्य इत्युक्तं भवति । तृतीयवचनोत्तरार्धेन तु पञ्चमाद्वर्षात्प्राग्गृहणीयात्पुत्रेष्टिं च चरेदिति निधीयते ।

ननु क्वायं विधिरित्यत आह- ग्रहण इति । अकृतचूडस्य वर्षत्रयादूर्ध्वं ग्रहणे प्रसक्तेऽयं विधिरित्यर्थः । तथा चाकृतचूडो यदि वर्षत्रयादूर्ध्वं जिघृक्षितः स्यात्तदा प्रथमतः पुत्रेष्टिं कृत्वा तस्य ग्रहणं तदपि पञ्चमवर्षात्प्रागित्युक्तं भवति । नन्वकृतचूडस्यापि वर्षत्रयादूर्ध्वं कः परिग्रहप्रसङ्गः । येन पुत्रेष्टिपूर्वकं तत्परिग्रह उच्यते । यतश्चूडाद्या इत्यस्मादेव वचनाज्जन्मसमयमारभ्य तृतीयवर्षसमाप्तिपर्यन्तस्यैव दत्तकपरिग्रहकालत्वप्रतीतेरिति चेन्न । पितुर्गोत्रेणेति वचनेन जनकगोत्रेण चूडान्तसंस्कारसंस्कृतस्य प्रतिग्रहीतृपुत्रत्वनिषेधेन यावत्पर्यन्तं जनकेन चूडासंस्कारो न कृतस्तावत्पर्यन्तं जिघृक्षितस्य प्रतिग्रहीतृनिरूपितपुत्रत्वयोग्यतायाः सूचनात् 'स्वकालादुत्तरः कालो गौणः सर्वः प्रकीर्तितः' इति स्मृत्यनुसंधानेन गौणकालसत्त्वेन वर्षत्रयादूर्ध्वमप्यकृतचूडग्रहणप्रसङ्गस्य सुवचत्वात् । नन्वेवमकृतचूडस्य वर्षत्रयादूर्ध्वमपि ग्रहणसंभवेऽपि चूडाद्या इति वचनेन प्रतिग्रहीत्रा चूडासंस्कारकरण एव दत्तकपुत्रत्वसिद्ध्यभिधानात् त्रिवर्षोर्ध्वं चूडाया मुख्यकाले तृतीयवर्षे परिग्रहाभावेन पितृत्वाप्राप्त्या प्रतिग्रहीतुर्मुख्यकाले चूडाकरणाधिकाराभावेन गौणकालेऽप्यनधिकारात्प्रतिग्रहीत्रा चूडायाः कर्तुमशक्यत्वात्प्रतिग्रहीतृकर्तृकचूडासंस्काराभावेन त्रिवर्षोर्ध्वं परिगृहीते दत्तकपुत्रत्वसिद्ध्यनुपपत्तिरिति चेन्न । एतद्वचनबलादेव यावता विनाऽनुपपत्तिस्तावतोंऽशस्य ज्ञाप्यत्वादिति न्यायेन प्रतिग्रहीतुर्मुख्यकाले चूडाधिकाराभावेऽपि गौणकाले चूडाधिकारो भवत्येवेति कल्पनात् । अन्यथा गौणकाले दत्तकपरिग्रहविधानं निरर्थकं स्यात् । अत एव 'ऊर्ध्वं तु पञ्चमाद्वर्षान्न दत्ताद्याः सुता नृप' इति संगच्छते । यद्वा 'चूडा कार्या यथाकुलम्' इति याज्ञवल्क्येन चूडायां गौणकालस्यापि मुख्यकालत्वबोधनात्तद्बलाद्दत्तकविषये चूडायां मुख्यकाले सिद्धाधिकारयोग्यत्वस्यैव गौणकालेऽधिकार इति नियमानुपपत्तेः । एतच्चाग्रे सविस्तरं निरूपयिष्यते । अत्र पुत्रेष्टिपूर्वकं पञ्चमाद्वर्षात्प्रागित्युक्त्या पञ्चमे वर्षे तदूर्ध्वं वा न

तदमूलम् । समूलत्वेऽपि यज्जनकगोत्रेण चूडान्तसंस्कारसंस्कृतस्य न ग्रहीतुः पुत्रत्वम् । ग्रहीत्रैव चूडादिसंस्कारकरणे तत् । यदि च कृतचूडोऽतीतपञ्चवर्षो वा आप्तो भवति न तदाऽस्य पुत्रत्वं संभवतीति च विवृण्वन्ति ।

तन्न । अनुवादापत्तेः । पञ्चवर्षाभ्यन्तरगृहीतस्याप्युपनयनात्पूर्वं सकलशिष्टानुमोदितपुत्रत्वव्यवहारानुपपत्तेः । तदानीं ग्रहीतरि मृते तच्छ्राद्धानधिकारापत्तेश्च । किंत्वयं वचनार्थः । जनकगोत्रेण कृतचूडासंस्कारस्य पुत्रत्वं निषिध्य प्रतिग्रहीत्रा पुनश्चूडादिकरणे तत्प्रतिप्रसूतम् । ततश्च कृतसंस्कारस्यातीत-

---

ग्राह्य इति सूचितं भवतीति । तदेतत्सर्वं प्रमाणाभावादग्राह्यमित्याह—अमूलमिति । पितुर्गोत्रेणेत्यारभ्य पुत्रेष्टिं प्रथमं चरेन, इत्यन्तं कैश्चित्पठ्यमानं वचनत्रयं तत्समूलं न भवति । प्रमाणभूतपुराणेष्वदर्शनादित्यर्थः । तथा च नास्ति निरुक्तसिद्धान्ते कश्चिदपि विरोधः ।

समूलत्वेऽपीति । कालिकापुराणे क्वचित्पुस्तके दृश्यमानत्वेन समूलत्वेऽपीत्यर्थः । प्रथमद्वितीयवचनार्थं प्रदर्शयति—' यज्जनकगोत्रेणेत्यादिना संस्कारकरणे तत् ' इत्यन्तेन । ' यदि च कृतचूडः ' इत्यारभ्य ' विवृण्वन्ति ' इत्यन्तेन तृतीयवचनस्यार्थः प्रदर्शितः । तत्रातीतशैशव इत्यस्यातीतपञ्चमवर्ष इत्यर्थोऽङ्गीकृत इति विशेषः । इत्थं वचनत्रयार्थविवरणं न युक्तमित्याह—तन्नेति । अयुक्तत्वे हेतुमाह—अनुवादेति । ' यदि स्यात ' इति वचनस्येत्यादिः । अयं भावः—पितुर्गोत्रेणेति वचनेन जनकगोत्रेण कृतचूडान्तसंस्कारस्य प्रतिग्रहीतृपुत्रत्वे निषिद्धे पुनर्यदि स्यादित्यनेनापि तस्यैव निषेध इति ' अग्निर्हिमस्य भेषजम् ' इतिवदनुवादत्वेनाप्रामाण्यापत्तेरिति । किंच यदि पञ्चमवर्षात्प्राग्ग्राह्य इति नियमः स्यात्तदा पञ्चवर्षान्तर्वयसो गृहीतस्य कृतसंस्कारस्यापि ' गर्भाष्टमेऽब्दे कुर्वीत ' इत्युक्तोपनयनात्पूर्वं सकलशिष्टसंमतो यः प्रतिग्रहीतुः पुत्रोऽयमिति व्यवहारस्तस्यानुपपत्तिः स्यात् । अपि च पञ्चवर्षानन्तरं गृहीतस्य पालकपितरि मृते सति पालकपितुः श्राद्धादेरधिकारो दत्तकस्य न स्यात् । अयं भावः—केनाचिज्जनकेन पित्राऽतीतपञ्चवर्षः स्वपुत्रः कस्मैचिद्दत्तः । ततः स्वल्पेनैव कालेन प्रतिग्रहीता दिवं गतः । तादृशस्योपरतस्य पितुः श्राद्धादिक्रियाकलापाधिकारो दत्तकस्य न स्यात् । यस्माद्दानेन तादृशपुत्रे जनकस्वत्वनिवृत्तेः पुत्रत्वस्यापि निवृत्तौ पञ्चमवर्षानन्तरं गृहीतत्वेन तादृशपुत्रे प्रतिग्रहीतृनिरूपितपुत्रत्वाप्राप्तौ च सत्यामयं जनकप्रतिग्रहीत्रोरुभयोरपि पुत्रो न भवतीति प्रतिग्रहीतुः श्राद्धादेरधिकारी भवितुं न शक्नोतीति ।

तस्मादेवं वचनार्थो वर्ण्यताम्—निषिध्येति । जनकगोत्रेण कृतचूडान्तसंस्का-

पञ्चमवर्षस्य च ग्रहीत्रा चूडादिकरणात्पूर्वं दासत्वाक्षेपाच्चूडादिकरणानन्तरं पुत्रत्वं लब्धम् । अकृतसंस्कारस्यानतीतपञ्चमवर्षस्य तु परिग्रहणादेव तत्प्राप्तं तच्च विततम् ।

अथवा जनकेन चूडान्तं संस्कृतोऽपि पुत्रो न पुत्र इत्यपुत्रत्वादेशः । यतोऽन्यतश्च पुत्रतां यातीति हेतुरुपदिष्टः । तथा चैकस्य पुत्रपदस्य चकारस्य च

---

रस्य परिग्रहे सति परिग्रहवशाद्यत्पुत्रत्वं तत्पितुर्गोत्रेणेति वचनेन निषिध्य चूडाद्या इत्यादिना तनयास्ते स्युरित्यन्तेन प्रतिप्रसूतमित्यर्थः । अथवेति । वक्ष्यमाणार्थान्तरे तु 'पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते । आचूडान्तं न पुत्रः सः' इत्यन्तेन निषिध्येत्यर्थः । प्रतिप्रसूतमिति । प्रतिग्रहीतुः पुत्रतां यातीत्यर्थकेन 'पुत्रतां याति चान्यतः' इत्यनेन पुनर्विधानात्प्रतिप्रसूतम् । निषिद्धस्य पुनर्विधानं हि प्रतिप्रसव इत्यर्थः । नन्वयं प्रतिप्रसवः किमविशेषेण ? नेत्याह—चूडाद्या इति । प्रतिग्रहीत्रा स्वगोत्रेण चूडाद्याः संस्कारा यदि क्रियन्ते तर्ह्येव दत्ताद्यास्तनया भवन्तीत्युक्तत्वात्स्वगोत्रकरणकप्रतिग्रहीतृकर्तृकचूडादिसंस्कारानुष्ठानरूपविशेषाश्रयेणायं प्रतिप्रसव इत्यर्थः । अन्यथा—कृतचूडान्तसंस्कारस्याकृतचूडान्तसंस्कारस्याप्यतिक्रान्तपञ्चवर्षस्य वा परिग्रहे सति स परिगृहीतो दास उच्यते । नेयं दासता निरवधिका । किंतु सावधिका । प्रतिग्रहीत्रा चूडादिसंस्कारकरणे पुत्रत्वप्राप्तेः श्रूयमाणत्वात् । अवधिश्च प्रतिग्रहीतृकर्तृकचूडादिसंस्कारानुष्ठानमेव । ततश्च प्रतिग्रहीत्रा यावत्पर्यन्तं चूडादिसंस्कारा नानुष्ठितास्तावत्पर्यन्तमेव दासतेत्यर्थः । प्रतिग्रहीत्रा चूडादिसंस्कारकरणे तु पुनर्विधानादस्य दत्तकस्य प्रतिग्रहीतृपुत्रत्वं लभ्यते । यश्चाकृतसंस्कारः सन् पञ्चवर्षाण्यनतिक्रान्तस्तादृशस्य परिग्रहे सति तत्र कृतसंस्कारत्वप्रयुक्तस्यातीतपञ्चवर्षत्वप्रयुक्तस्य वा दासत्वस्याभावेन परिग्रहबलादेव प्रतिग्रहीतृपुत्रत्वं सिध्यति । तच्च विततं विस्तृतं दासत्वेनापि चेना संकुचितं न जातं निराबाधमेवेति यावत् । अर्थान्तरं वर्णयति—अथवेति । जनकेन पित्रा चूडान्तं संस्कृतोऽपि पुत्रः 'न पुत्रः' इत्यपुत्रत्वमतिदिश्यते । जनकस्यैकस्यैव पुत्र इति न मन्तव्यम् । तत्र हेतुं निर्देष्टुं 'पुत्रतां याति चान्यतः' इत्युक्तम् । यस्मादयं पुत्रश्चान्यस्यापि प्रतिग्रहीतुरपि पुत्रत्वं याति गच्छतीति हेतोरेकस्य जनकस्यैव नायं पुत्रः किंतूभयोरपि जनकप्रतिग्रहीत्रोः पुत्रो भवति नाम द्व्यामुष्यायणः संपद्यत इत्यर्थः । एवमथवेति पक्षान्तरोक्ते व्याख्याने सति 'न पुत्रः' इत्यत्रत्यः पुत्रशब्दः 'याति चान्यतः' इत्यत्रत्यश्चशब्दश्च न व्यर्थो भवति । न

वैयर्थ्यदूषणमपि परिहृतम् । एवं च चूडाद्या इत्यतद्गुणसंविज्ञानबहुव्रीहिणा द्विजातीनामुपनयनान्ताः । शूद्रस्य तु विवाहादिकाः ।

पुत्र इत्यपुत्रत्वातिदेशार्थं 'अपुत्रः' इत्यस्यापीत्यर्थः । जनकपितृसम्बन्धार्थं च तयो-रुपयोगात् । अतः पञ्चमवर्षात्प्राक् जनकपित्रानुसारेणाऽऽचूडान्तं संस्कृतः सोऽन्यस्य पुत्रतां न यातीति प्रथमवाक्यस्य तयोरप्यर्थः स्पष्टः ।

नन्वकृतचूडस्य दत्तकोऽपि नामगोत्रेण परिग्रहे सति परिग्रहणशास्त्रादपि पुत्रत्वं चूडादिकरणात्प्राग्दासत्वाभावादिति प्रतिग्रहीत्रा चूडादिसंस्कारकरणेन लब्धं भवती-त्युक्तं तच्चूडायां गौणकालादरणे कथंचिदुपपद्येत । किंतु कृतचूडस्य परिग्रहे सति प्रतिग्रहीत्रा चूडादिकरणेन दासत्वापगमात् पुत्रत्वं लभ्यत इति यदुक्तं तदनुपपन्नमिव भाति । जनकपितृकृतानां जातादिचूडान्तसंस्काराणामनावृत्तेः पूर्व-मुक्तत्वाच्चूडामुख्यकाले तृतीयवर्षे परिग्रहाभावेन पितृत्वाप्राप्त्या प्रतिग्रहीतुर्मुख्यकाले चूडाकर्माधिकाराभावेन गौणकालेऽपि तदधिकारानुद्भूततदवस्थत्वेन चूडासंस्कारार्हताभावा-दित्याशङ्कयाऽऽह—एवं चेति । निरुक्तकारणत्रयाज्जनकपितृकृतचूडासंस्कारस्य प्रतिग्रहीत्रा पुनरननुष्ठाने सिद्धे चेत्यर्थः । 'चूडाद्या यदि संस्काराः' इति वचने चूडाद्यपदे चूडा आद्या आद्यावयवो येषां संस्काराणामिति तद्गुणसंविज्ञान-बहुव्रीहेराश्रयितुमशक्यत्वाच्चूडा आद्या प्रागवर्तिनी येषां संस्काराणामित्यतद्गुणसं-विज्ञानबहुव्रीहिराश्रीयत इत्यर्थः । आद्यशब्दस्य प्रथमावयववाचित्वं विहाय पूर्वसमीपार्थबो-धकत्वं लक्षणया गृह्यत इति भावः । तेन चूडाद्यपदेनोपनयनं लब्धम् । तच्च ब्राह्मणक्षत्रियवैश्यानामेव । न शूद्रस्य । अष्टमे वर्षे ब्राह्मणमुपनयीतैकादशे राजन्यं द्वादशे वैश्यमिति ब्राह्मणादिवर्णविशेषसंयोगेनोपनयनस्य विहितत्वात् । अत एव द्विजातित्वं च द्विर्जायन्त इति व्युत्पत्त्या जन्मद्वयवत्त्वम् । जन्मद्वयं च 'मातु-रग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने' ( म० स्मृ० २ । १६९ ) इति मनुना प्रदर्शितम् । तत्र मातुः सकाशाज्जायमानं प्रथमं जन्म । तच्च चतुर्णामपि वर्णा-नामस्त्येव । द्वितीयं तु मौञ्जिबन्धने सति जायमानम् । मौञ्जिबन्धन इत्यत्र 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' ( पा० सू० ६ । ३ । ६३ )। इति ह्रस्वः । मौञ्जी-बन्धनाज्जायमानं द्वितीयं जन्म ब्राह्मणक्षत्रियवैश्यानामेवेति तेषां 'ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः' ( म० स्मृ० १० । ४ ) इति द्विजातिसंज्ञां विधाय तदनुसारेण 'चतुर्थ एकजातिस्तु शूद्रः' इति शूद्रस्योपनयनाभावेनैकजा-तित्वमेकजन्मवत्त्वं मनुनोक्तं संगच्छते । तथा च शूद्रस्योपनयनस्थाने विवाहो ग्राह्यः । तद्विवाहस्योपनयनस्थानीयत्वात् । एवं चूडाद्यपदेऽतद्गुणसंविज्ञानबहुव्रीहावा-

अन्यशाखोद्भवो दत्तः पुत्रश्चैवोपनायितः ।
स्वगोत्रेण स्वशाखोक्तविधिना स स्वशाखभाक् ॥

इति प्रागुक्तैकवाक्यत्वात् । पञ्चमाद्वर्षादिति ब्रह्मवर्चसफलार्थिविप्राभिप्रायम् । "ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे" इति मनुवचने तत्कामस्य

---

श्रूयमाणं प्रागुक्तवसिष्ठवचनैकवाक्यत्वलाभाल्लाघवमपि भवतीत्याह—अन्यशाखोद्भव इति । अनेन प्रतिग्रहीतृकर्तृकोपनयनसंस्कारेण दत्तकपुत्रत्वसिद्धिरुक्ता । चूडाद्यपदं तद्गुणबहुव्रीहौ स्वीक्रियमाणे तु वाक्यभेदरूपं गौरवं दुरुद्धरं स्यात् । तस्मात्प्रतिग्रहीत्रा स्वगोत्रेणोपनयनप्रभृतिसंस्कारे कृते दासत्वाक्षेपं दूरीकृत्य पुनः पुत्रत्वं विहितमिति भावः । एवं च मूले 'पुनश्चूडादिकरणं' इत्यत्रत्यः पुनःशब्दो वाक्यालंकारे न तु कृतस्य पुनःकरणमित्येवमर्थकः । कृतस्य चूडान्तसंस्कारस्य प्रतिग्रहीत्रा पुनःकरणस्याशास्त्रीयत्वादिति बोध्यम् ।

एतेन कृतचूडेऽकृतचूडेऽप्यतीतपञ्चवर्षे वा परिगृहीते सति तत्र परिग्रहनियोगवशादेव सिद्धमपि पुत्रत्वं दासत्वदोषाक्रान्तमिति प्रतिग्रहीतृकर्तृकोपनयनसंस्कारेण पुनरुत्पद्यत इत्युक्तं भवति । तत्र कृतचूडे प्रतिग्रहीतृकर्तृकोपनयनसंस्कारेण पुत्रत्वं पुनरुत्पन्नं तद्युक्तमेव । किंत्वतीतपञ्चवर्षे तत्कथं पुनरुत्पद्यताम् । प्रतिग्रहीत्रा तदुपनयनस्य कर्तुमशक्यत्वात् । उत्तरसंस्कारानुष्ठानं प्रति तत्पूर्वसंस्कारानुष्ठानस्य कारणत्वेन चौलसंस्कारकरणमन्तरोपनयनसंस्कारकरणस्याशास्त्रीयत्वेनासिद्धत्वात् । न च चौलसंस्कारोऽपि प्राक्करणीय इति वाच्यम् । चूडामुख्यकाले तृतीयवर्षे परिग्रहाभावेन पितृत्वाप्राप्त्या तन्मुख्यकालकर्त्रोर्युगपदवस्थानासंभवेन प्रतिग्रहीतुर्मुख्यकाले सिद्धाधिकारयोग्यत्वाभावाद्गौणकालेऽप्यनधिकारेण चौलसंस्कारस्य कर्तुमशक्यत्वात् । अत एव गर्भाष्टमाब्दादिमुख्यकालानन्तरं प्रतिगृहीते प्रतिग्रहीतृकर्तृकोपनयनसंस्काराभावेन दत्तकपुत्रत्वं न सिध्यतीति प्रागुक्तं संगच्छते । उपनयनं च ब्राह्मणक्षत्रियविशां क्रमेण गर्भादष्टम एकादशे द्वादशे वर्षे 'गर्भाष्टमेऽब्दे कुर्वीत' ( म० स्मृ० २ । ३६ ) इति मनुनोक्तम् । ततश्च मासत्रयाधिकसप्तमवर्षपर्यन्तं मासत्रयाधिकदशमवर्षपर्यन्तं मासत्रयाधिकैकादशवर्षपर्यन्तं ब्राह्मणक्षत्रियविशां पुत्रप्रतिग्रहकालः सिध्यति ।

ननु तदग्रे 'ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे । राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे' ( म० स्मृ० २ । ३७ ) इति ब्रह्मवर्चसादितत्तत्कामसंयोगेन गर्भात्पञ्चमे षष्ठेऽष्टमे वर्षेऽपि ब्राह्मणादीनामुपनयनमुक्तमस्ति । ततश्च संशयः—किं गर्भादष्टमाब्दादिर्मुख्य उपनयनकाल उत गर्भात्पञ्चमाब्दादिरिति । तत्रेच्छानिच्छाभ्यामुभयोरपि कालयोर्मुख्यत्वम् । ब्रह्मवर्चसादिकामेच्छोर्विप्रादेर्गर्भात्पञ्च-

गाब्दात्प्रिमुख्यः । तत्तत्कामानिच्छोस्तु गर्भाष्टमाब्दादिर्मुख्यः । तत्र ब्रह्मवर्चसफलेच्छुं विप्रमुद्दिश्य पञ्चमाद्वर्षात्पूर्वं ग्राह्य इत्युक्तम् । एवं सति 'ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे' इत्यनेनैकवाक्यता भवति । अर्थाद्यो ब्रह्मवर्चसफलं नाऽऽकाङ्क्षते तादृशः पुत्रो गर्भाष्टमाब्दात्पूर्वं ग्राह्य इति सिद्धं भवति । एवं क्षत्रियवैश्ययोरप्युपनयनस्य स स मुख्यः कालः समाहृतोऽस्ति । विप्रादेरुपनयनस्य यो यो मुख्यः कालस्तस्मात्पूर्वं दत्तकः पुत्रो ग्राह्यस्तदुत्तरं न ग्राह्य इति कथनेन यस्य यत्कर्मणो मुख्यकालेऽधिकारयोग्यताऽस्ति तस्यैव गौणकालेऽपि तत्कर्माधिकारो भवतीति सूचितम् । तेन ब्रह्मवर्चसफलार्थि अतीतपञ्चमवर्षश्च पुत्रः परिगृह्यते चेत्र तत्र दत्तकपुत्रत्वं सिध्येत् । प्रतिग्रहीतृकर्तृकोपनयनसंस्काराभावात् । ब्रह्मवर्चसफलार्थ्युपनयनस्य मुख्यकाले पञ्चमवर्षे परिग्रहाभावेन पितृत्वासिद्ध्या प्रतिग्रहीतुर्मुख्यकालेऽधिकाराभावेन गौणकालेऽप्यधिकाराभावात् । एतदाशयेनैवोक्तम्—अतीतपञ्चमवर्षो न ग्राह्य इति । यदि तु ब्रह्मवर्चसफलार्थी पुत्रः पञ्चमवर्षात्प्राक्परिगृहीतस्तदा प्रतिग्रहीतुर्मुख्यकाले पितृत्वप्राप्त्योपनयनाधिकारयोग्यत्वसत्त्वेन केनचित्कारणेन पञ्चमवर्षे तदकरणेऽपि षष्ठादौ गौणकालेऽप्यधिकारसत्त्वात्तत्रोपनयनसंस्कारे कृते प्रतिग्रहीतृपुत्रत्वं सिद्धं भवतीत्युक्तं पञ्चमाद्वर्षात्प्राग्ग्राह्य इति । ब्रह्मवर्चसादितत्तत्फलार्थिनो विप्रादेरुपनयनस्य पञ्चमादिवर्षादूर्ध्वं गौणकालः 'गर्भाष्टमाब्दे कुर्वीत' ( म० स्मृ० २ । ३६ ) इत्युक्तगर्भाष्टमैकादशद्वादशाब्दपर्यन्तं बोध्यः । यस्य तु गर्भाष्टमाब्दो मुख्य उपनयनकालस्तस्य मुख्यकालादूर्ध्वं 'आ षोडशाद्ब्राह्मणस्य सावित्री नातिवर्तते । आ द्वाविंशात्क्षत्रबन्धोरा चतुर्विंशतेर्विशः' ( म० स्मृ० २ । ३८ ) इति मुख्यवर्षाद्द्विगुणितवर्षपर्यन्तं गौणकालो बोध्यः । एवं च ब्रह्मवर्चसफलार्थिनो विप्रस्य पञ्चमवर्षानन्तरं परिग्रहो न कार्यः । ब्रह्मवर्चसफलानर्थिनस्त्वष्टमाब्दाद्यनन्तरं परिग्रहो न कार्य इति सिद्धम् ।

नन्वेवं ब्रह्मवर्चसफलानार्थिनोऽकृतचूडस्याष्टमाब्दात्प्रागपि पञ्चमवर्षादूर्ध्वं ग्रहणे सति तत्र दत्तकपुत्रत्वं न सिध्येत् । प्रतिग्रहीत्रा तदुपनयनस्य कर्तुमशक्यत्वात् । उत्तरसंस्कारानुष्ठानं प्रति तत्पूर्वसंस्कारानुष्ठानस्य कारणत्वेन चौलसंस्कारकरणमन्तरोपनयनकरणस्याशास्त्रीयत्वेनासिद्धत्वात् । न च चौलसंस्कारोऽपि ततः पूर्वं करणीय इति वाच्यम् । चूडामुख्यकाले तृतीयवर्षे परिग्रहाभावेन पितृत्वाप्राप्त्या तन्मुख्यकालकर्त्रोर्युगपदवस्थानासंभवेन प्रतिग्रहीतुर्मुख्यकाले चूडाधिकारयोग्यत्वाभावाद्गौणकालेऽप्यनधिकारेण प्रतिग्रहीत्रा तदानीं चौलकरणस्यात्यन्तासंभवात् । अत एव जन-

पञ्चमवर्षस्यैवोपनयनमुख्यकालत्वेन तदेकमूलत्वात् । वदनर्थिनस्त्वाश्रमान्ध्वादीति। क्षत्रियादेरप्युपनयनतत्तन्मुख्यकालादरः । मुख्यकालेऽपि सिद्धाधिकारयोग्यत्व-स्यैव गौणकालेऽपि संस्काराधिकारादित्युक्तमायम् । चूडायां गौणकालादरस्तु वचनबलादेव ।

कपितृकृतस्य चूडासंस्कारस्य पुनरनुष्ठाने प्रतिग्रहीतुरधिकार एव नाऽऽयाति काला-भावादित्युक्तं प्राक् । न च यदि जनकेन पित्रा केनापि कारणेन चूडासंस्कारो नानुष्ठितस्तर्हि प्रतिग्रहीत्रैव स कर्तव्य इत्यप्युक्तं प्रागिति वाच्यम् । तृतीयवर्षे परि-गृहीतस्य तदुक्तिविषयत्वात् । तादृशस्यैव चूडाकरणे प्रतिग्रहीतुरधिकारसंभवा-दित्याशङ्क्याऽऽह—**चूडायां गौणकालादरस्तु वचनबलादेवेति** । अयं भावः—'चूडा कार्या यथाकुलम्' ( या० स्मृ० १ । १२ ) कुलधर्मानुसारेण मुख्य-काले वा गौणकाले वा चूडा कार्या, नतु मुख्यकाले करणासंभवे गौणकाले कर्तव्येति याज्ञवल्क्येन गौणमुख्यकालयोः समकक्षविकल्पाभिधानाद् गौणकालोऽपि मुख्य-कालसमकक्षतया चूडायां प्राधान्येनाऽऽदृतः प्रतीयते । यदि तु चूडायां गौणमु-ख्यकालयोः प्राधान्याप्राधान्याभ्यामादरः स्यात्तदा 'तृतीये वर्षे चूडाकर्म पञ्चमे वा' इति शङ्खलिखितवचनवन्निर्देष्टव्यं स्यात् । तथा सति प्रथमोपात्तत्वात्तृतीयं वर्षं चूडायां मुख्यं पञ्चमं तु तदनन्तरमुपात्तत्वाद्गौणमिति विज्ञाते 'गौणमु-ख्ययोर्मुख्ये कार्यसंप्रत्ययः' इति न्यायेन मुख्यकाले चौलं कर्तव्यम् । यदि तु मुख्यकाले केनचित्कारणेन तत्प्रतिबन्धसंभवे गौणकाले कर्तव्यमिति प्राधान्येन मुख्य-काले चूडाकर्तव्यता विज्ञायेत । तन्मा भूदिति तथा नोक्तम् । किंतु मुख्यकाले तत्करणसंभवेऽपि तं परित्यज्य स्वेच्छया गौणकालेऽपि कर्तव्यमित्येवं गौणकाल-स्यापि मुख्यकालसमकक्षताप्रतीत्यर्थं मुख्ये वा गौणे वा चौलमित्युक्तम् । यद्यपि यथाकुलमित्युक्तत्वात्कुलधर्मानुसारेण गौणकालस्य मुख्यसमकक्षतोक्ता तथाऽपि 'असति बाधके प्रमाणानां सामान्ये पक्षपातः' इति न्यायेनाविशेषेण चूडायां गौणकालोऽपि मुख्यवद्ग्राह्य इति बोध्यते । गौणकाले मुख्यकालत्वारोपप्रयोजनं तु गौणकालेऽपि चूडाकर्तव्यताबोधनमेव । तत्र जनकपिताऽऽरोपमन्तरेणापि गौणकाले चूडां कर्तुं प्रभवत्येव । पितृत्वस्य स्वयंसिद्धत्वेन चूडाया मुख्यकाले तृतीयवर्षे सिद्धाधिकार-योग्यत्वसत्त्वेन गौणकालेऽपि तदधिकारस्य सुवचत्वात् । तस्माज्जनकपितृविषये नायमारोपः सप्रयोजनः । किंतु यस्य मुख्यकालेऽधिकार एव नोत्पन्नो गौण-काले चोत्पन्नस्तादृशप्रतिग्रहीतृपितृविषय एव प्रयोजनं वक्तव्यम् । यथा केनाचि-द्वर्षत्रयादूर्ध्वं दत्तकः परिगृहीतः । तस्य चूडामुख्यकाले परिग्रहाभावेन पितृत्वा-

प्राप्त्या चूडाधिकाराभावाद्गौणकाले पितृत्वप्राप्तावपि मुख्यकाले यस्य यत्राधिकारोऽस्ति तस्यैव गौणकाले तत्राधिकार इति नियमात्ताद्दशपालकपितुर्गौणकाले चूडाकरणं न प्राप्नोतीति तस्यापि तत्रापि चूडाकरणप्राप्त्यर्थमारोपः सप्रयोजनः । वस्तुतो मुख्यकालेऽधिकाराभावेऽपि मुख्यत्वारोपबलाद्गौणकालेऽप्यधिकारोऽस्तीति कल्पनात् । सत्येवं यद्ययं गौणकाले मुख्यकालत्वारोपः कुलधर्मानुसारेण स्यात्तदा यस्य प्रतिग्रहीतुः कुले गौणकाल एव चूडाकरणसंप्रदायस्तेन त्रिवर्षोर्ध्वं परिगृहीतस्य दत्तकस्य चूडाकरणं सिध्येत् । वस्तुतो मुख्यकालेऽधिकाराभावेऽपि मुख्यकालत्वारोपाद्गौणकालेऽधिकारसत्त्वात् । किंतु यस्य प्रतिग्रहीतुः कुले मुख्यकाल एव चूडाकरणसंप्रदायस्तेन त्रिवर्षोर्ध्वं परिगृहीतस्य चूडाकरणं न सिध्येत् । तत्कुलधर्मानुसारेण गौणकाले मुख्यकालत्वारोपाभावात् । तस्माच्चूडायां गौणकालोऽपि मुख्यकालवत्समादरणीय इत्येवाविशेषेण कल्प्यते । प्रतिग्रहीतृकर्तृकचूडायां मुख्यकाले सिद्धाधिकारयोग्यत्वस्यैव गौणकाले संस्काराधिकार इत्येवं नियमो नेति यावत् । तदेतद्वचनबलादिति बलशब्दप्रयोगेण सूचितम् । एवं च प्रकृतस्थले प्रतिग्रहीतुर्मुख्यकाले चूडाधिकारात्यन्तासंभवेऽपि गौणकाले मुख्यकालारोपबलाच्चूडाधिकारसत्त्वान्न काचित्क्षतिः । ततश्चाकृतचूडो यदि तृतीयवर्ष एव परिगृहीतस्तर्हि तत्र परिग्रहीतुरेतद्वचनाश्रयणमन्तरेणैव चूडाधिकारः सिद्ध इत्याशयः । पुत्रेष्टिं प्रथमं चरेदित्यस्य यदि कृतचूडो जिघृक्ष्यते तर्हि संस्कारेभ्यः पूर्वं पुत्रेष्टिं कुर्यादित्यर्थः । पुत्रेष्टिपूर्वकसंस्कारैः कृतचूडस्य पुत्रत्वं भवतीति यावत् । अर्थाद्यद्यकृतचूडः परिजिघृक्षितस्तर्हि पुत्रेष्टेर्नाऽऽवश्यकता । तस्यां च पुत्रेष्टौ द्विजातेरेवाधिकारात्तेनैवानुष्ठेया भवति । तत उपनयनादिसंस्कारेण गृहीते पुत्रत्वं संपाद्यम् । शूद्रस्य तु पुत्रेष्ट्यामधिकाराभावात्तेन कृतचूडस्य परिग्रहेऽपि केवलं विवाहसंस्कारेणैव तत्र पुत्रत्वं संपाद्यम् । एवं च सर्वैः प्राचीनग्रन्थकारैर्जन्मसमयादिकालविशेषानन्तर्भावेणैव कृतं यत्पुत्रपरिग्रहविधानं तदुपपद्यते । कालविशेषान्तर्भावे तु नैवोपपद्येतेत्ययुक्तः कालविशेषान्तर्भावः । यतः ‘ किंत्वयं वचनार्थः ’ इत्यादि ‘ तच्च विततम् ’ इत्यन्तग्रन्थेन तथा ‘ पञ्चमाद्वर्षादिति ब्रह्मवर्चसफलार्थविप्राभिप्रायम् ’ इत्यादिना च मयोक्तार्थस्य लक्षणादिकं विनाऽक्षरमर्यादयैव सिद्धत्वादित्यर्थः । उपनयनान्तेषु संस्कारेषु जनकगोत्रेण जातेषु सत्स्वपि स दत्तकपुत्रो भवितुमर्हतीति ‘ अथ ह शुनःशेपो विश्वामित्रस्याङ्कमाससाद स होवाचाऽऽजीगर्तः सौयवसिर्ऋषे पुनर्मे पुत्रं देहि ’ इत्यैतरेयब्राह्मणाद्व्यक्तं प्रतीयते । शुनःशेपः स्वेच्छया विश्वामित्रपुत्रत्वमङ्गीकृत्य सहसा तदीयमङ्कमाससादेति । न चासौ शुनःशेपोऽनुपनीतः । तादृशस्य वेदाध्ययनासंभवात् । अनधीतवेदस्य च

पुत्रेष्टिमिति । वर्णत्रयस्यैवाधिकारात् । तत्र पुत्रेष्टिपूर्वकं ग्रहणादिभिः पुत्रत्वं संपाद्यम् । शूद्रेण तु तदाऽपि संस्कारमात्रं देयमिति सर्वमनवद्यम् । एवं च सर्वेषा-मेव प्राचां कालविशेषमनन्तर्भाव्यैव पुनःपरिग्रहविधानमुपपद्यते । उक्तार्थस्य स्वतः सिद्धत्वात् ।

अथैवमुक्तवचनपरव्याख्याने कृतचूडस्य दत्तकस्य जनकमात्रपुत्रत्वं निषि-

---

मन्त्रकरणकप्रजापत्यादिस्तुतौ प्रवृत्त्ययोगात् । इन्द्रदत्तसुवर्णस्य प्रतिग्रहे समन्त्रके प्रवृत्त्ययो-गाच्चेत्यादि संस्कारकौस्तुभे स्पष्टम् । दत्तकस्तु परिणीत उत्पन्नपुत्रोऽपि च भव-तीति च तातचरणाः । युक्तं चेदं बाधकाभावात् । यत्तु कालिकापुराणे पितु-र्गोत्रेणेत्यादि 'पुत्रेष्टिं प्रथमं चरेत्' इत्यादिवचनत्रयम् । तन्न तथा विस्रम्भणी-यम् । छिन्नकालिकापुराणपुस्तकेऽदर्शनादिति व्यवहारमयूखे दत्तकप्रकरणे उक्तम् । एतेन कालविशेषमनन्तर्भाव्यैव दत्तकपुत्रविधानमिति स्पष्टमेव प्रतीयत इति यावत् ।

एवं वचनत्रयस्य समूलत्वेऽपि निरुक्तार्थवर्णनस्य प्राचीनानामथावश्यकत्वं प्रदर्श्यातद्गुणबहुव्रीह्याश्रयणेन चूडाया इत्यस्योपनयनाद्या इत्यर्थे सिद्धे 'यदि स्यात्कृतसंस्कारः' इति वचनस्यैतद्ग्रन्थकारमतेनैवमर्थो वर्ण्यताम्——कृतसंस्कारः कृतोपनयन इत्यर्थः । पूर्वत्रोपनयनस्य प्रक्रान्तत्वात् । अतीतशैशव इत्यस्य चातीतगर्भाष्टमाब्दायुपनयनकाल इत्यर्थः । गर्भस्थैः सदृशो ज्ञेय आऽष्टमाद्वत्सराच्छिशुः । बाल आ षोडशाद्वर्षात्पौगण्डश्चेति कथ्यते । तथा दक्षः——जातमात्रः शिशुस्ताव-द्यावदष्टौ समा गतः । स हि गर्भसमो ज्ञेयो व्यक्तिमात्रप्रकाशितः । इत्यष्टमाब्द-परिमितवयसः शिशुत्वाभिधानात् । यदि तादृशः परिगृह्येत तर्हि स प्रतिग्रहीतुः पुत्रो न भवेदिति शेषः । तादृशे प्रतिग्रहीतृनिरूपितं पुत्रत्वं न सिध्येदिति यावत् । कृतोपनयनसंस्कारोऽष्टमवर्षेऽपि विधिना परिगृहीतोऽपि च पुत्रत्वसिद्धिहेतो-र्मुख्यस्योपनयनसंस्कारस्य जातत्वेनोपनयनसंस्कारार्हत्वाभावात् । प्रतिग्रहीतुरुपनयनसं-स्कारकरणाधिकारसत्त्वेऽप्युपनयनस्य कर्तुमशक्यत्वात्प्रतिग्रहीतृकर्तृकोपनयनसंस्काराभावेन पुत्रो भवितुं नार्हतीत्यर्थः । अतिक्रान्तोपनयनकालस्य मुख्यकाले प्रतिग्रहाभावात्पि-तृत्वाप्राप्त्या प्रतिग्रहीतुर्मुख्यकाल उपनयनाधिकाराभावाद्गौणकालेऽप्यनधिकारेण संस्का-रार्हत्वेऽपि प्रतिग्रहीतृकर्तृकोपनयनसंस्काराभावेन पुत्रो न भवतीति भावः । अथा-कृतोपनयनस्य पञ्चमवर्षादूर्ध्वमष्टमवर्षात्प्राग्ग्रहणे कर्तव्यविशेषं विधत्ते——ग्रहण इति । अकृतोपनयनसंस्कारस्यापि पञ्चमवर्षादूर्ध्वं ग्रहणे कर्तव्ये पूर्वं पुत्रेष्टिं चरेत् । पुत्रेष्टिपूर्वकं तादृशस्य संग्रहणं कृत्वोपनयनादिना पुत्रत्वं संपाद्यमिति यावदिति ।

द्व्यामुष्यायणदत्तकमभिधातुमाह——अथैवमिति । उक्तवचनपरव्याख्यान इति ।

ध्यान्यतश्च पुत्रत्वं यातीत्यत्र चकारेण जनकप्रतिग्रहीतृसाधारण्यं लब्धमुभयो-रेव संस्कारकत्वात् । तच्चोभयोरावयोरयं पुत्र इत्यभिसंधाने बोध्यम् । अय-मेव द्व्यामुष्यायणो नाम द्विपिता द्विगोत्रश्च ।

ननु क्षेत्रजस्यैव द्विपितृकत्वं दृश्यते । तथा हारीतः—जीवति क्षेत्रजमाहु-रस्वातन्त्र्यान्मृते द्व्यामुष्यायणमगुप्तबीजत्वात् । जीवत्यपि क्रियाभ्युपगमाद्द्वि-

---

पितृगोत्रेणेत्याद्युक्तवचनस्याथवेति पक्षान्तरेणोक्ते 'जनकेन कृतचूडस्य दत्तकस्य केवल-जनकपुत्रत्वं निषिध्यान्यतश्च पुत्रत्वं यातीत्यत्रत्यचकारेण जनकपितुः समुच्चयाज्ज-नकप्रतिग्रहीत्रोरुभयोः पित्रोः पुत्रत्वं लभ्यते। तयोरुभयोरपि संस्कारकर्तृत्वात्' इत्ये-वंरूपे व्याख्याने यद्दत्तकस्योभयोः पुत्रत्वमुक्तं तदुभयोः 'आवयोरयं पुत्रः' इत्येवं संकल्पे सत्येव बोध्यम् । तेनाकृतचूडस्य ग्रहण आवयोरयं पुत्र इति संकल्पे सत्यपि कृतचूडस्य ग्रहणे संकल्पेऽसति च तादृशदत्तकस्य नोभयपुत्रत्वम् । प्रथमे संकल्पे सत्यप्युभयोः संस्कारकत्वाभावात् । द्वितीय उभयोः संस्कारकत्वेऽपि संकल्पाभावादिति भावः । जनकेन कृतचूडः सन्यो जनकपालकयोः पित्रोरावयोरयं पुत्र इति संकल्पविषयश्च सोऽसावेव दत्तको द्विपितृको द्विगोत्रश्चेत्यर्थकेन द्व्यामु-ष्यायणशब्देन शास्त्रे व्यवह्रियते । द्व्यामुष्यायणविषये शङ्कते—नन्विति । दत्त-कविशेषस्य यद्द्विपितृकत्वमुक्तं तदयुक्तम् । यतः शास्त्रे क्षेत्रजपुत्रस्यैव द्विपितृकत्वं वर्ण्यमानं दृश्यते । हारीतेन क्षेत्रजस्य द्विपितृकत्वमुक्तमित्याह—जीवतीति । पत्यौ जीवति सति तदनुमत्या तत्क्षेत्रेऽन्येनोत्पादितमपत्यं क्षेत्रजं वदन्ति । तत्र हेतुमाह—अस्वातन्त्र्यादिति । क्षेत्रस्य सर्वात्मना पतिपरतन्त्रतया क्षेत्रिण एव स पुत्रो न तु बीजवप्तुरपि । बीजवप्तुस्तत्र स्वामित्वाभावेऽभिसंधिरस्वातन्त्र्यम् । पत्यौ मृते तु तत्क्षेत्रेऽन्येनोत्पादितमपत्यं द्व्यामुष्यायणं द्विपितृकं वदन्ति । तत्र हेतुः—अगुप्तबीजत्वादिति । पत्यभावेनासंरक्षितक्षेत्रे बीजावापात्तत्र बीजवप्तुरपि स्वामित्वम् । बीजवप्तुः स्वामित्वेऽभिसंधिः—अगुप्तत्वम् । असंरक्षितत्वेन क्षेत्रस्य बीजवप्त्रधीनत्वेन तत्र बीजवप्तुरपि स्वामित्वम् । अत्र बीजवप्तैकः पिता यस्य च क्षेत्रं सोऽन्यः पितेति द्विपितृकत्वं ज्ञेयम् । यथा लोके क्षेत्रस्वामिनो ब्राह्म-णादेरनुज्ञया श्रमजीवी कृषीवलो बीजवापादिकं कुर्वन्नपि न तज्जन्यस्य सस्यस्य स स्वामी किंतु क्षेत्रस्वाम्येव तत्स्वाम्युच्यते । व्यवहारानुसारेण कर्षकश्रमप-ण्यमिति किंचिद्दीयत इति त्वन्यत् । यस्य च क्षेत्रस्य निर्वंशत्वात्स्वामी न लभ्यते नापि तत्संबन्धी संनिहितः कश्चित्तादृशेऽगुप्तक्षेत्रे पूर्वसंप्रदायानुसारेण बीजा-वापं कुर्वन्नेव तत्क्षेत्रस्वामी गण्यते । तेनैव च राजग्राह्यो भागो देयोऽन्यत्सर्वं

पितृको भवतीत्याह मनुः—

क्रियाभ्युपगमात्त्वेवं बीजार्थं यत्प्रदीयते ।

तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च ॥ इति ।

अपुत्रबीजिक्षेत्रिकयोर्मम क्षेत्रं तव बीजं यदपत्यं तदावयोरित्ययं क्रियाभ्युपगमः । तथा—

अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ।

उभयोरप्यसावृक्थी पिण्डदाता च धर्मतः ॥ इति ।

दत्तकस्य तु तद्दृष्टचरं प्रत्युत—गोत्ररिक्थे जनयितुर्न हरेद्दत्त्रिमः सुत इति प्रागुक्तमनुवचनं तद्विपरीतार्थग्राहकमेवास्तीति चेन्न । दत्तकादिष्वपि—

सर्वेषामेकधर्माणामेकस्यापि यदुच्यते ।

---

तत्कुलीयं कृत्यं च निर्वाह्यं भवति तद्वदित्यर्थः । एवं च हारीतः पत्यौ मृते तत्क्षेत्रस्य द्विपितृकत्वं स्मरति स्म । मनुस्तु जीवत्यपि पत्यौ क्रियाभ्युपगमात्क्षेत्रजस्य द्विपितृकत्वमाहेति दर्शयति—**क्रियाभ्युपगमात्त्वेतत्**० ( म० स्मृ० ९ । ५२ ) इति । अस्यार्थः—अत्रोत्पन्नमपत्यमावयोरुभयोरपि भवत्विति संविदङ्गीकरणाद्यत्क्षेत्रं क्षेत्रस्वामिना बीजवापार्थं बीजिने प्रदीयते तत्रोत्पन्नस्यापत्यस्य बीजिक्षेत्रिणौ भागिनौ स्वामिनौ दृष्टौ महर्षिभिरिति । बीजिक्षेत्रिणोर्द्वयोः पित्रोः स भाग इत्यर्थः । दृष्टावित्यस्य स्थाने दिष्टाविति पाठे दिष्टावुपदिष्टौ कथिताविर्थः ।

क्रियाभ्युपगमपदार्थं स्वयमेव वर्णयति—**अपुत्रबीजीति** । बीजं वीर्यमस्यास्तीति क्षेत्रं पत्नी अस्यास्तीति बीजिक्षेत्रिकौ । मत्वर्थे कमादिनिठनौ । अविद्यमानपुत्रौ यौ बीजिक्षेत्रिकौ तयोः ‘ मम क्षेत्रे तव बीजाद्यदपत्यमुत्पत्स्यते तदावयोर्द्वयोः ’ इत्येवं यो नियमः स क्रियाभ्युपगमः । ‘ अपुत्रेण परक्षेत्रे ’ ( या० स्मृ० २ । १२७ ) अस्यार्थो मिताक्षरायाम्—‘ अपुत्रां गुर्वनुज्ञातः ’ ( या० स्मृ० १ । ६८ ) इत्याद्युक्तविधिना नियुक्तो देवरादिः स्वयमप्यपुत्रोऽपुत्रस्य क्षेत्रे स्वपरपुत्रार्थं प्रवृत्तो यं जनयति स द्विपितृको द्व्यामुष्यायणो द्वयोरपि रिक्थहारी पिण्डदाता च धर्मतो भवतीति । तथा च मनुयाज्ञवल्क्याभ्यामपि क्षेत्रजस्यैव द्विपितृकत्वं वर्णितम् । नतु दत्तकस्य द्विपितृकत्वं वर्ण्यमानं दृश्यते । प्रत्युत ‘ गोत्ररिक्थे जनयितुः ’ ( म० स्मृ० ९ । १४२ इति दत्तकस्य जनकपितृसंबन्धिगोत्ररिक्थपिण्डानां निषेधाद्दत्तकस्य द्विपितृकत्वं नास्तीति विपरीतार्थावगमकमेव वचनं दृश्यत इति चेन्न । **सर्वेषामेकधर्माणामिति** । सर्वानुगतेनैकेन धर्मेण युक्तानां मध्य एकस्यापि यत्कार्यमुच्यते तत्सर्वेषां संबन्धि ज्ञेयम् । ‘ प्रत्येकं वाक्यपरिस-

सर्वेषामेव तत्कुर्यादेकरूपा हि ते स्मृताः ॥

इति बौधायनदर्शनेन क्षेत्रजधर्मलाभात्। द्वे श्राद्धे कुर्यादेकश्राद्धे वा पृथगनूदिश्यैकपिण्डे वा द्वावनुकीर्तयेत्प्रतिग्रहीतारं चोत्पादयितारमा तृतीयात्पुरुषादिति सांख्यायनप्रवराध्याये सामान्यतो दर्शनाच्च दत्तकस्यापि द्विपितृकत्वसिद्धिः।

अत एव सत्याषाढोऽपि नित्यानां व्द्यामुष्यायणानां द्वयोरिति सूत्रेण नित्यव्द्यामुष्यायणानां क्षेत्रजानां सप्रवरगोत्रद्वयसंबन्धमुक्त्वा दत्तकादीनां द्व्यामुष्यायणवदिति सूत्रेण तद्धर्ममतिदिशति। विवृतं चैतद्भाष्यकारैः। नित्यव्द्यामुष्यायणप्रसङ्गेनानित्यानाह—दत्तकादीनामिति। तावदेव गोत्तरसंततौ।

---

भागिः' इति न्यायेन तस्य कार्यस्य सर्वैः सह संबन्धः करणीय इति यावत्। यथैकस्य ब्राह्मणस्य तृप्तिपर्यन्तं भोजनदाने प्रतिपादिते सहस्रस्य ब्राह्मणानां प्रत्येकं तृप्तिपर्यन्तं भोजने दत्त एव सहस्रब्राह्मणभोजनं संपद्यते नान्यथा तद्वदिति भावः। एकस्मिन्नुक्तस्य सर्वैः सह संबन्धे हेतुमाह—एकरूपा हीति। हि यस्मात्ते सर्वे एकरूपा एकधर्मयुक्ताः सन्तीति हेतोरित्यर्थः। एकधर्मयुक्तत्वात्तादृशधर्मयुक्त एकस्मिन्नुक्तं तादृशधर्मयुक्ते सर्वस्मिन्नसंबध्यत इति तात्पर्यम्। इति बौधायनवचनेन पुत्रप्रतिनिधित्वरूपैकधर्मयुक्तानां दत्तकक्रीतकृत्रिमादीनामेकादशपुत्रप्रतिनिधीनां मध्ये क्षेत्रजपुत्रविषयेऽभिहितस्य द्विपितृकत्वस्य दत्तकादिष्वप्युक्तप्रायत्वेनाक्षतेः। द्वे श्राद्धे इति। किंच प्रतिनिधिपुत्रेण जनकपितरं पालकपितरं चोद्दिश्य पृथक् पृथक् श्राद्धद्वयं कर्तव्यम्। अथवैकश्राद्धे जनकस्य पालकस्य च पृथङ्नामोच्चार्योभयोरेकैकः पिण्डो देयः। किंवैकस्मिन्पिण्डे द्वयोर्नामोल्लेख्यं द्वयोर्नामोच्चार्यैक एव पिण्डो देयः। एवं तृतीयपुरुषमभिव्याप्य शक्ताशक्तभेदेन कल्पत्रयानुसारेण श्राद्धं कर्तव्यमिति सांख्यायनप्रवराध्याये सामान्यतो दत्तकादिविशेषमनुपादाय श्राद्धविधिदर्शनाद्दत्तकस्यापि द्विपितृकत्वं लभ्यते। अत्र शक्ताशक्तभेदेन व्यवस्थितं कल्पत्रयं न त्वैच्छिकम्। तथा सति लाघवेन 'एकपिण्डे द्वावनुकीर्तयेत्' इति तृतीयकल्पस्यैव सर्वैरङ्गीकरणसंभवेन प्रथमकल्पद्वयस्य निर्विषयत्वं प्रसज्येतेति।

अत एवेति। दत्तकस्य द्विपितृकत्वादेव। सत्याषाढर्षिः 'नित्यानां व्द्यामुष्यायणानां द्वयोः' इति सूत्रे नित्यव्द्यामुष्यायणस्य प्रवरसहितगोत्रद्वयसंबन्धमुक्त्वा प्रवरसहितगोत्रद्वयसंबन्धरूपं नित्यव्द्यामुष्यायणधर्ममनित्यव्द्यामुष्यायणे 'दत्तकादीनां व्द्यामुष्यायणवत्' इति सूत्रेणातिदिशति। दत्तकादीनामिति द्वितीयसत्याषाढसूत्रं शाबरभाष्यकारैर्व्याख्यातमित्याह—विवृतं चैतदिति। तदेव विवरणमनुवदति—नित्यव्द्यामुष्यायणप्रसङ्गेनेत्यादिना तेनैवोत्तरत्रेत्यन्तेन ग्रन्थेन। एतद्भाष्यार्थ

ग्रथमेनैव संस्कारः प्रतिग्रहीत्रा चेत्तदोत्तरस्यैव पूर्वत्वात्तेनैवोत्तरत्रेति।

एतद्भाष्यार्थस्तु—क्षेत्रजवदुभयोरभिसंधौ दत्तकस्योभयगोत्रभागित्वम्। अन्यथा जनकेनैव सर्वसंस्कारकरणे जनकगोत्रभागित्वं, न ग्रहीतृगोत्रभागित्वम्। ग्रहीत्रा संस्कारकरणे तूत्तरस्य ग्रहीतुः पूर्वत्वात्प्राधान्यात्तेनैवोत्तरसंततेर्गोत्रमिति।

---

स्वयमेव लिखति—क्षेत्रजवदिति। यथा क्षेत्रजपुत्रे बीजिक्षेत्रिणोरुभयोः 'आवयोरयं पुत्रः' इत्यभिसंधौ सति द्विपितृकत्वं भवति तथा कस्मिन्नप्येकस्मिन्दत्तकपुत्रे जनकपालकयोः 'आवयोरयं पुत्रः' इत्यभिसंधौ सति तादृशो दत्तकः पितृद्वयसंबन्धवद्गोत्रद्वयसंबन्धं लभते। अयमेवानित्यद्व्यामुष्यायण इत्युच्यते। अनेन 'दत्तकादीनां द्व्यामुष्यायणवत्' इत्यस्यार्थः प्रदर्शितः। स च गोत्रद्वयसंबन्धो दत्तकस्यैव न तत्संततेरित्यर्थकस्य 'तावदेव नोत्तरसंततौ' इत्यस्यार्थं प्रदर्शयितुमाह—अन्यथेति। उभयोरभिसंध्यभावे सति, अर्थाज्जनकेनोत्पादकेन द्व्यामुष्यायणदत्तकेनैव सर्वसंस्कारेषु कृतेषु जनकस्योत्पादकस्य यद्गोत्रं तदेव गोत्रं तदपत्यस्य भवति। न प्रतिग्रहीतृगोत्रभागित्वम्। यद्यपि दत्तकस्य यद्गोत्रं तत्प्रतिग्रहीतुरेव गोत्रं तथाऽपि द्व्यामुष्यायणदत्तके यज्जनकगोत्रसंसर्गविशिष्टप्रतिग्रहीतृगोत्रं विद्यते तादृशगोत्रभागित्वं नेत्यत्र तात्पर्यम्। दत्तकवज्जनकपितृगोत्रसंबन्धो दत्तकसंततेर्नास्तीति यावत्। तथा चानेन 'तावदेव नोत्तरसंततौ' इत्यस्यार्थोऽभिहितः। प्रतिग्रहीत्रैव संस्कारेषु कृतेषु तु दत्तकस्य प्रतिग्रहीतुरेव गोत्रं भवति न जनकपितुर्गोत्रम्। अयं केवलदत्तक इत्युच्यते। अनेन 'परिग्रहीत्रा चेदुत्तरस्य' इत्यस्यार्थः प्रदर्शितः। केवलदत्तकस्य यद्गोत्रं तेनैव गोत्रेण केवलदत्तकसंततेर्गोत्रं भवतीत्यर्थः। अनेन 'तेनैवोत्तरत्र' इत्यस्यार्थः प्रदर्शितः।

अत्रेदं बोध्यम्—दत्तकस्त्रिविधः। नित्यद्व्यामुष्यायणोऽनित्यद्व्यामुष्यायणः केवलश्चेति। तत्र नित्यद्व्यामुष्यायणो नाम—आवयोरयं पुत्र इति संकल्प्य जातमात्र एव जनकेन प्रतिग्रहीत्रे दत्तः। अस्मिन्दत्तके 'आवयोरयम्' इति संकल्पबलात्प्रतिग्रहीत्रोरुभयोः पित्रोर्गोत्रस्य संबन्धो भवति। अत एवायं द्व्यामुष्यायण इत्युच्यते। गोत्रद्वयसंबन्धभागित्वं हि द्व्यामुष्यायणत्वमिति यावत्। स च गोत्रद्वयसंबन्धो जन्मक्षणमारभ्य यावदवसानक्षणं व्याप्नोतीत्यसौ नित्यद्व्यामुष्यायणशब्देन व्यवह्रियते। जातमात्रस्य परिग्रहादस्य जातकर्मादिकाः सर्वे संस्काराः प्रतिग्रहीतृगोत्रेण भवन्ति। ईदृग्विधस्य च द्व्यामुष्यायणस्य पुत्रपौत्रादिसंततेरपि गोत्रद्वयभागित्वम्। 'द्व्यामुष्यायणकस्येव नोद्वाहो गोत्रयोर्द्वयोः। तदपत्यस्य तज्जन्मगोत्रमेव विदुर्बुधाः' तद्द्व्यामुष्यायणस्य गोत्रद्वयं, तत्संततेर्जन्मगोत्रमेव बुधा विदुरित्यर्थकाद्धर्म-

तथा च पैठीनसिः—अथ दत्तकक्रीतकृत्रिमपुत्रिकापुत्राः परपरिग्रहेणाऽऽर्षेण येऽत्र जातास्तेऽसंगतकुलीना द्व्यामुष्यायणा भवन्तीति । आर्षेण ऋष्युक्तेन परिग्रहेण जनकग्रहीत्रोः स्वीकारेण द्व्यामुष्यायणा भवन्तीत्यर्थः । व्यक्त-मुक्तम्—

द्व्यामुष्यायणका ये स्युर्दत्तक्रीतादयः सुताः ।

---

प्रवृत्ताचाचार्यवचनादिति ।

अनित्यद्व्यामुष्यायणो नाम—यश्चूडान्तैः संस्कारैर्जनकेन संस्कृत्य पश्चाद्दत्तः । चूडान्तैः संस्कारैर्जनकगोत्रेणोपनयनादिभिश्च प्रतिग्रहीतृगोत्रेणेत्युभयगोत्रेण संस्कृ-तत्वादस्याप्युभयगोत्रसंबन्धभागित्वम् । सोऽयं गोत्रद्वयसंबन्धो न जन्मत आरभ्ये-त्यसौ दत्तकः शास्त्रेऽनित्यद्व्यामुष्यायण इत्युक्तः । एतद्दत्तकसंततेर्न गोत्रद्वयसं-बन्धः । 'तावदेव नोत्तरसंततौ' तावदेव दत्तकपर्यन्तमेव जनकगोत्रमनुवर्तते नोत्तरत्र तत्संतताविति सत्याषाढेन निषेधात् । किंतु प्रतिग्रहीत्रेकगोत्रत्वमेवेति ।

केवलो नाम—जातमात्रं पुत्रं परिगृह्य प्रतिग्रहीत्रा जातकर्माद्यखिलैः संस्कारैश्चू-डादिसंस्कारैर्वा संस्कृतः । 'गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः' इति मनुना जनकपितृगोत्रसंबन्धनिषेधादस्य प्रतिग्रहीत्रेकगोत्रत्वमेव । यदि चात्रैव जनकगोत्रसं-बन्धाभावस्तर्हि तत्संततौ तद्गोत्रसंबन्धाभाव इति किमु वक्तव्यम् । तथा चैतत्संत-तेरपि प्रतिग्रहीत्रेकगोत्रत्वमेव । पुत्रपौत्रादिवंशपरम्परयाऽपि प्रतिग्रहीत्रेकगोत्रभागित्वा-देवायं शास्त्रे केवलदत्तक इत्युच्यते । अत्र केवलदत्तकलक्षणे जातमात्रपदमसंजात-चूडपरं मन्तव्यम् । अत एव जातकर्मादिभिश्चूडादिभिर्वा संस्कृत इति विकल्पः संगच्छते । अन्यथा जातमात्रस्य परिग्रहे तत्र जातकर्माद्यन्नप्राशनान्तसंस्काराणामा-वश्यकतया चूडादिभिर्वेति विकल्पानुपपत्तेरिति ।

द्विपितृकत्वं न केवलं क्षेत्रजपुत्रे, किंतु दत्तकादिष्वपि तदस्तीत्यत्रार्थे पैठी-नसिसंमतिं प्रदर्शयन्नाह—**अथ दत्तकेत्यादि** । दत्तकः, क्रीतः, कृत्रिमः, पुत्रिका-पुत्रश्चेत्येवं ये शौनकाद्यृषिप्रोक्तेन परिग्रहविधिना परस्य पुत्रा जातास्ते, संगत-कुलीनाः संगताः संबद्धाः कुलीना जनककुलीना येषां तादृशाः सन्तो द्व्यामु-ष्यायणा भवन्ति, इति पैठीनसिवचनस्यार्थं स्वयमेव निर्वक्ति—**आर्षेण परिग्रहेणेति** । जनकप्रतिग्रहीत्रोरावयोरयं पुत्र इत्यभिसंधौ सति ये दत्तक्रीतादयः सुता ऋष्युक्तेन परिग्रहविधिना परेण गृहीताः स्युश्चेत्ते द्व्यामुष्यायणा नाम द्विपितृका उच्यन्त इत्यर्थः । **द्व्यामुष्यायणका इति** । द्व्यामुष्यायणा—द्विपितृका इति प्रसिद्धा ये दत्तक्रीतादयः सुतास्तेषां जनकगोत्रे प्रतिग्रहीतृगोत्रे चेत्युभयगोत्रे विवाहो न

गोत्रद्वयेऽप्यनुद्वाहः शौङ्गशैशिरयोर्यथा ॥ इति ।

न च दत्तकस्य व्यामुष्यायणत्वं न घटते । जनकस्यापि तत्र स्वत्वानपायेन 'माता पिता वा दद्याताम्' इति दानविध्यनुपपत्तेरिति वाच्यम् ।

सामान्यं सर्वभूतेभ्यो मयोत्सृष्टमिदं जलम् ।
रमन्तु सर्वभूतानि स्नानपानावगाहनैः ॥

इत्यादौ स्वमात्रस्वत्वनाशकसर्वभूतोद्देश्यकत्यागादेव नद्यादिवत्साधारणीकृते जले स्वामिनोऽप्युद्देश्यतया स्वत्ववदनापि तादृशाभिसंधिपूर्वकादेव दानाचादृशदत्तकस्य साधारण्यसिद्धिरित्यास्तां विस्तरः ।

## अथ तृतीयं प्रकरणम् ।

अथ दत्तककर्तृकश्राद्धनिर्णयः । तत्र पितुः सपिण्डीकरणान्तषोडशश्राद्धे

---

भवति । तत्र दृष्टान्तः—शौङ्गशैशिरयोरिति । भारद्वाजाच्छौङ्गाद्वैश्वामित्रस्य शैशिरेः क्षेत्रे जातः शौङ्गशैशिरिनामा ऋषिः । तस्य गोत्रलक्षणाक्रान्तत्वाद्गोत्रत्वम् । तद्गोत्रीयाणां यथा भारद्वाजगोत्रे विश्वामित्रगोत्रे च विवाहो न भवति तद्वदित्यर्थः । अत्र दत्तकादिषु व्यामुष्यायणत्वं स्पष्टमेवाभिहितम् । अत्र कश्चिच्छङ्कते—**न च दत्तकस्येति** । दत्तकस्य व्यामुष्यायणत्वं न घटते । अघटने हेतुमाह—**जनकस्यापीति** । व्यामुष्यायणत्वस्य जनकपालकोभयपितृनिरूपितस्वत्वरूपत्वेन दत्तके जनकपितुरपि स्वत्वस्य सद्भावात् । 'माता पिता वा दद्याताम्' इत्युक्तमातापितृकर्तृकदानस्वरूपान्तर्गतस्वस्वत्वानिवृत्तेरनिवृत्तेर्दानस्वरूपानुपपत्तेरित्यर्थः । इमामाशङ्कां परिहरति—**सामान्यमिति** । यावत्प्राणिनामुपभोगार्थमिदं जलं मयोत्सृष्टम् । सर्वभूतोपकारार्थं मया जलाशयोत्सर्गः कृतोऽतः सर्वभूतान्यत्र जले स्नान—पान—अवगाहनादिभी रमन्तु क्रीडन्तु । अत एवेदं जलं सर्वभूतानां सामान्यं—साधारणं न त्वेकस्य ममैवेति तदर्थः । अत्रोत्सर्गे पूर्वं यत्स्वस्यैव स्वत्वं जल आसीत्तद्विनाश्य स्वसहितसर्वभूतान्युद्दिश्य जलोत्सर्गादेव यथा नद्यादेर्जलं स्वस्वेतरोभयोः स्वत्ववत्तद्वादिदमपि जलं स्वस्वेतरोभयस्वत्ववदिति कृत्वोत्सर्गकर्तुः स्वामिनोऽप्युद्दिष्टसर्वभूतान्तर्गतत्वेन तत्र जले स्वत्वं भावति । स्वेतरस्वत्वाभावसमानाधिकरणस्वस्वत्वनिवृत्तिपूर्वकस्वस्वत्वसमानाधिकरणपरस्वत्वोत्पादनरूपाव्द्यापाराद्यथा जलस्य स्वस्वेतरयोः साधारण्यं तथा 'आवयोरयं पुत्रः' इत्यभिसंधिपूर्वकात्स्वेतरस्वत्वाभावसमानाधिकरणस्वस्वत्वनिवृत्तिपूर्वकस्वस्वत्वसमानाधिकरणपरस्वत्वोत्पादनरूपाद्दानादेव दत्तकस्य जनकपालकयोरुभयोः स्वत्ववत्त्वादुभयसाधारणत्वं सिध्यतीति भावः ।

## ( अथ तृतीयं प्रकरणम् ) ।

अथ दत्तककर्तृकश्राद्धं निर्णयति—**तत्र पितुः सपिण्डीति** । अत्र दत्तक-

दत्तकस्य पूर्वगृहीतत्वेऽपि सत्यौरसे नाधिकारः। 'औरसे पुनरुत्पन्ने तेषु ज्येष्ठयं न विद्यते' इति देवलेन ज्येष्ठत्वप्रतिषेधात्। 'पिण्डदोंऽशहरश्चैषां पूर्वाभावे

---

पदेन पूर्वोक्तस्त्रिविधो दत्तको ग्राह्यः। दत्तकग्रहणादनन्तरं यद्यौरस उत्पद्येत तदा स औरस एव पितुर्दाहादिसपिण्डीकरणान्तषोडशश्राद्धाधिकारी, नतु पूर्वं गृहीतोऽपि दत्तकः। पूर्वगृहीतदत्तकस्याधिकाराभावे हेतुमाह—**औरसे पुनरिति**। दत्तकग्रहणानन्तरमौरस उत्पन्ने सति पूर्वं गृहीतेष्वपि तेषु दत्तकादिषु ज्येष्ठत्वं न विद्यत इति देवलेन दत्तके ज्येष्ठत्वनिषेधात्। सर्वेषां तु मतं कृत्वा ज्येष्ठेनैव तु यत्कृतम्। द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत्। इत्यादिना ज्येष्ठ एव हि सांवत्सरिकादिष्वौर्ध्वदेहिके चाधिकारीत्युच्यते। यतश्च तज्ज्येष्ठत्वं तादृशदत्तके न भवति तत एव च स पितुरौर्ध्वदेहिकाधिकारी न भवतीत्यर्थः।

ननु दत्तके निषेधाज्ज्येष्ठत्वं मा भूत्तथाऽपि दत्तकस्यौर्ध्वदेहिकाधिकाराभाव औरसस्यैव च तदधिकारे किं मानमित्याशङ्कयाऽऽह—**पिण्डदोंऽशहरः०** ( या० स्मृ० २। १३२ ) इति। औरसो धर्मपत्नीजः० ( या० स्मृ० २। १२८ ) इत्यादिनाऽनुक्रान्ता ये द्वादश पुत्रास्तेषां मध्ये पूर्वस्य पूर्वस्याभाव उत्तर उत्तरः श्राद्धदो धनहरश्च वेदितव्य इति याज्ञवल्क्येनोक्तत्वात्प्रथमस्यौरसस्य श्राद्धाधिकारमुक्त्वौरसाभावे पुत्रिकासुतस्य, पुत्रिकासुताभाव क्षेत्रजस्येत्येवं पूर्वपूर्वाभाव उत्तरोत्तरस्य श्राद्धाधिकारप्रतिपादनात् 'मातुः पितुः प्रकुर्वीत संस्थितस्यौरसः सुतः। पैतृमेधिकसंस्कारं मन्त्रपूर्वकमादितः' इति स्मृतिचन्द्रिकायां सुमन्तुवचनाच्च प्रकृतस्थल औरससत्त्वेन नैव दत्तकः श्राद्धाधिकारी, किंत्वौरस एव तदधिकारीत्यर्थः।

नन्वेवमौरससत्त्वे दत्तकस्यौर्ध्वदेहिकादिसकलश्राद्धेष्वनाधिकारः प्राप्नोतीति कथमुच्यते। पितुः सपिण्डीकरणान्तषोडशश्राद्धानधिकारी दत्तक इति चेन्न। अर्वाक्संवत्सराज्ज्येष्ठः श्राद्धं कुर्यात्समेत्य च। ऊर्ध्वं सपिण्डीकरणात्सर्वे कुर्युः पृथक् पृथक्। (१), नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश। एकेनैव तु कार्याणि संविभक्तधनेष्वपि। (२), सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश। पृथङ्नैव सुताः कुर्युः पृथग्द्रव्या अपि क्वचित्। ऊर्ध्वं पिण्डीकरणात्सर्वे कुर्युः पृथक् पृथक् (३) इति व्यासोशनोलघुहारीतैः सपिण्डीकरणान्तमौर्ध्वदेहिकश्राद्धं ज्येष्ठ एव कुर्यात्सांवत्सरिकादिकं तु ज्येष्ठकनिष्ठावुभावपि कुर्यातामित्युक्तत्वादौर्ध्वदेहिकस्य ज्येष्ठत्वप्रयुक्तत्वाज्ज्येष्ठत्वस्य चौरससमवधाने दत्तके निषिद्धत्वात्पितुः सपिण्डीकरणान्तषोडशश्राद्ध एव दत्तकोऽनधिकारीति भावः। सांवत्सरिकादिश्राद्धस्य पुत्रत्वप्रयुक्तत्वेन पुत्रत्वस्य च दत्तकेऽपि सत्त्वादौरसवद्दत्तकोऽपि सांवत्सरिकादि-

परः परः ' इति याज्ञवल्क्यवचनाच्च । अन्यत्र सर्वत्रौरसवत् । क्षयाहे तु विशेषो यथा जातूकर्णिः—

औरसक्षेत्रजौ पुत्रौ विधिना पार्वणेन तु ।
प्रत्यब्दमितरे कुर्युरेकोद्दिष्टं सुता दश ॥

इतरे दश दत्तकादयः । तथा पराशरः—

पितुर्गतस्य देवत्वमौरसस्य त्रिपौरुषम् ।
सर्वत्रानेकगोत्राणामेकोद्दिष्टं क्षयेऽहनि ॥ इति ।

अनेकगोत्राणां द्विगोत्राणाम् । औरसक्षेत्रजयोरपि साग्न्योरेव पार्वणा-

---

श्राद्धाधिकारी भवतीत्यनुसंधायोक्तम्—अन्यत्र सर्वत्रेति । सपिण्डीकरणान्तषोडशश्राद्धादन्येषु सांवत्सरिकादिषु सर्वेषु श्राद्धेषु दत्तक औरसश्च समानमधिकारिणौ स्त इत्यर्थः । तत्रौरसादविभक्तेन दत्तकेन सांवत्सरिकादिकं पृथङ्न कर्तव्यमौरसकृतेनैव सांवत्सरिकादिना दत्तकस्य तत्तच्छ्राद्धसिद्धेः । 'एकेनैवाविभक्तेषु कृते सर्वैस्तु तत्कृतम्' सुतेष्वविभक्तेषु सत्सु तेषां मध्ये योग्याधिकारिणैकेनैव सांवत्सरिकादिश्राद्धे कृते सति तावतैव तच्छ्राद्धं सर्वैः कृतं भवतीति मदनरत्नेऽभिधानात् । यदि च स दत्तक औरसाद्विभक्तस्तदा तेन दत्तकेन सांवत्सरिकादिश्राद्धं पृथगनुष्ठेयम् । 'विभक्तास्तु पृथक् कुर्युः प्रतिसंवत्सरादिकम्' इति मदनरत्नादिति भावः ।

दत्तककर्तृके पितुः क्षयाहश्राद्धे विशेषो जातूकर्णेनोक्तः—औरसक्षेत्रजाविति । औरसः पुत्रः 'औरसो धर्मपत्नीजः' ( या० स्मृ० २ । १२८ ) इति लक्षणलक्षितः । 'क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा' ( या० स्मृ० २ । १२८ ) इत्युक्तः क्षेत्रजः । एतौ द्वौ पुत्रौ पितुः प्रत्यब्दं प्रतिवर्षं मृततिथौ क्रियमाणं श्राद्धं गृह्योक्तविधिना पार्वणेन पित्रादित्रयोद्देशेन कुर्याताम् । इतरे दत्तकादयो दश सुतास्तु पितुः प्रत्यब्दं क्षयाहश्राद्धमेकोद्दिष्टमेकं पितरमुद्दिश्य कुर्युरिति तदर्थः । पराशरेणापि—पितुर्गतस्येति । मरणोत्तरं देवभावं प्राप्तस्य पितुरौरसः पुत्रः पितृमातामहादिश्राद्धे त्रयमुद्दिश्य पार्वणं मृततिथौ कुर्यात् । अथ चानेकगोत्रा—द्विगोत्रा दत्तकादयः पितुः क्षयाहश्राद्धमेकोद्दिष्टं कुर्युरित्युक्तम् । निर्णयसिन्धौ ( पृ० १३९७ ) सटीके 'मृताहे त्वेकमुद्दिश्य कुर्युः श्राद्धं यथाविधि' एकमेवोद्दिश्य प्रतिसांवत्सरमेकोद्दिष्टमेवेत्यर्थकं कार्ष्णाजिनिवचनमुदाहृत्य 'इदं मृताह एकोद्दिष्टाचारपरमित्युक्तं तट्टीकायाम् । यदौरसक्षेत्रजयोः पितुः क्षयाहे पार्वणमुक्तं तदप्यौरसक्षेत्रजयोरग्निमत्त्वे सत्येव बोध्यम् । 'पार्वणेन विधानेन

धिकारः । "पार्वणेन विधानेन देयमग्निमता सदा" इति जाबालमत्स्यपुराणै-कवाक्यात् । औरसक्षेत्रजव्यतिरिक्तानां तु साग्निनिरग्निसाधारणानामेकोद्दिष्टमिति सिद्धम् ।

---

देयमग्निमता सदा' 'अग्निमता पुत्रेण पितुः क्षयाहे पार्वणेन विधिना श्राद्धं कार्यम्' इति जाबालिमत्स्यपुराणवचनैकवाक्यत्वात् । अन्यथा 'संभवत्येकवाक्यत्वे वाक्यभेदो हि दूषणम्' इत्यभियुक्तोक्त्या वाक्यभेदरूपदूषणप्रसङ्गात् । तथा च यद्यौरसो निरग्निकस्तदा तस्यापि पितुः क्षयाहश्राद्धे पार्वणं न प्राप्नोति जाबाल्यादिवचनैकवाक्यतयौरसस्य साग्निकस्यैव पार्वणविधानात् । किंतु तादृशेनौरसेनापि पितुः क्षयाह एकोद्दिष्टं कार्यमिति ज्ञेयम् । औरसक्षेत्रजाभ्यामितरेषां दत्तकादीनां तु निरग्निकत्वेऽग्निमत्त्वे वैकोद्दिष्टमेवेति सिध्यति । एकोद्दिष्टविधौ साग्निनिरग्निकृतव्यवस्थाया अनुक्तेरिति भावः । एवं च 'अन्यत्र सर्वत्रौरसवत्' इत्यत्रान्यत्रेत्यस्य क्षयाहश्राद्धं वर्जयित्वा मघामावास्यादिश्राद्धेष्वित्यर्थो बोध्यः । मघादिश्राद्धेष्वौरसो यावतः पितॄनुद्दिश्य श्राद्धं करोति दत्तकोऽपि तावतः पितॄनुद्दिश्य श्राद्धं करोतीत्यौरसवद्दत्तकोऽपि मघादिश्राद्धेषु समानमधिकारी । क्षयाहश्राद्धे त्वौरसः पार्वणाधिकारी । दत्तकस्त्वेकोद्दिष्टाधिकारीति विशेषसत्त्वात् ।

एतदपरे न मन्यन्ते । आपाद्य च सापिण्ड्यत्वमौरसो विधिवत्सुतः । कुर्वीत दर्शवच्छ्राद्धं मातापित्रोः क्षयेऽहनि । सपिण्डीकरणं कृत्वा कुर्यात्पार्वणवत्सदा । प्रतिसंवत्सरं विद्वांश्छागलेयोदितो विधिः । इति जमदग्निशातातपाभ्यां मातापित्रोः क्षयाहश्राद्धे पार्वणाभिधानात् । न च 'वर्षे वर्षे च कर्तव्या मातापित्रोस्तु सत्क्रिया । अदैवं भोजयेच्छ्राद्धं पिण्डमेकं च निर्वपेत् । सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतः । मातापित्रोः पृथक्कार्यमेकोद्दिष्टं मृतेऽहनि । इति स्मृत्यन्तरयमाभ्यां मातापित्रोः क्षयाहश्राद्ध एकोद्दिष्टाभिधानात् 'एकोद्दिष्टं परित्यज्य पार्वणं कुरुते नरः । अकृतं तद्विजानीयात्स भवेत्पितृघातकः । इति व्यासेनैकोद्दिष्टपरित्यागेन पार्वणकरणे दोषाभिधानाच्च वचनविप्रतिपत्तौ सत्यां 'औरसक्षेत्रजौ पुत्रौ०' इति जातूकर्ण्यवचनादग्निमद्भ्यामौरसक्षेत्रजाभ्यां मातापित्रोः क्षयेऽहनि पार्वणं कार्यं दत्तकादिभिर्दशभिस्तु साग्निनिरग्निसाधारणैरेकोद्दिष्टं कार्यमित्येवं निरुक्ता व्यवस्था युक्तेति वाच्यम् । न ह्यौरसक्षेत्रजाविति वचने क्षयाहवचनमस्ति, अपि तु प्रत्यब्दमिति । सन्ति च क्षयाहव्यतिरिक्तानि प्रत्यब्दश्राद्धान्यक्षय्यतृतीयामाघीवैशाखीप्रभृतिषु । अतो नेदं वचनं मातापित्रोः क्षयाहश्राद्धे पार्वणैकोद्दिष्टयोर्व्यवस्थापनायालम् ।

यदप्युक्तमौरसक्षेत्रजाभ्यामप्यग्निमद्भ्यामेव 'मातापित्रोः क्षयेऽहनि पार्वणं कार्यं

निरग्निकयोर्यां तु ताभ्यामप्येकोद्दिष्टम् । 'पार्वणेन विधानेन द्वेयमग्निमता सदा' इति जाबालिमतस्यापेक्षवाक्यत्वादिति । तदप्यसत् । बहवस्सन्ति ये विप्रा ये चैकाश्रय एव च । तेषां सपिण्डनादूर्ध्वमेकोद्दिष्टं न पार्वणमिति स्मृत्यन्तरात् । अमावास्यायां क्षयाहे, प्रेतपक्षे क्षयाहे च पार्वणमेव कर्तव्यम् । अमावास्यां क्षयो यस्य प्रेतपक्षेऽथवा पुनः । पार्वणं तत्र कर्तव्यं नैकोद्दिष्टं कदाचन । इति स्मृतेर्नियमपरत्वाङ्गीकारात् । तस्मादमावास्याप्रेतपक्षाभ्यामन्यत्र मातापित्रोः क्षयाहे सति निरुक्तानुजमदग्न्यादिस्मृत्यन्तरादिवचनद्वयात्पार्वणैकोद्दिष्टयोर्वैदिकयवाद्विकल्प एवोचितः । तथाऽयं षड्दोषपरिजिहीर्षयाऽग्निमताऽनुदितहोमवत्तत्पक्षग्राहिकुलसंप्रदायानुरोधेन व्यवस्थितौ सत्यां व्यवस्थितो विकल्पो बोध्यः । एतदनुसंधायैव निर्णयसिन्धुटीकायां गादेकृतायां ( काशी० मुद्रि० १२९८ पृष्ठे ) 'मृताहे त्वेकमुद्दिश्य कर्तुः श्राद्धं यथाविधि' इत्येकोद्दिष्टाभिधानं 'मृताहे एकोद्दिष्टान्तरपरम्' इत्युक्तं संगच्छते । संगच्छते चेदानीं सर्वत्र शिष्टाचारे दत्तकौरसादिसर्वैर्निवेः पुत्रैर्निरग्निभिरपि मातापित्रोः क्षयाहश्राद्धेऽनुष्ठीयमानं पार्वणम् । असत्यां तु व्यवस्थितायां व्यवस्थितो विकल्पः । स नास्मिन्विषयस्त इत्यन्यत् ।

मातापित्रोः क्षयाहश्राद्धे 'औरसक्षेत्रजौ' इति वचनात्पार्वणैकोद्दिष्टयोर्व्यवस्थां ब्रुवतश्चन्द्रिकाकारस्य त्वयमाशयः—यद्यप्यौरसक्षेत्रजाविति वचने क्षयाहवचनं नास्ति किंतु प्रत्यब्दमित्येव सामान्यं वर्तते तथाऽपि प्रत्यब्दशब्देन क्षयाहश्राद्धमेवात्र विवक्षितम् । पितुर्गतस्य देवत्वमौरसस्य त्रिपौरुषम् । सर्वेषामेकगोत्राणामेकोद्दिष्टं क्षयेऽहनि । इति पराशरवाक्ये क्षयाहपदोपादानात् । अत्र क्षयेऽहनि—अर्थान्मातापित्रोः क्षयाहश्राद्धे औरसपुत्रस्य पार्वणमभिहितं, अनेकगोत्रशब्दवाच्यानां दत्तकादीनां त्वेकोद्दिष्टम् । ततश्चैतदेकवाक्यतयौरसक्षेत्रजौ पार्वणं कुर्यातामथ चेतरे दत्तकादयस्त्वेकोद्दिष्टं कुर्युरित्यर्थकानेकवचने प्रत्यब्दशब्देन क्षयाहश्राद्धमेव विवक्षितं नामामावास्यादिश्राद्धमित्यवगम्यते । न चैकशब्दस्य 'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा । साधारणे समानेऽल्पे संख्यायां च प्रयुज्यते' इत्यभियुक्तोक्त्या समानार्थकत्वेनानेकशब्दस्यासमानार्थवाचकत्वाद्भिन्नार्थे पर्यवसानेन भिन्नगोत्राणां मातामहानां क्षयाहे एकोद्दिष्टमिति येन पुत्रेण स्वपितुर्जनकस्य क्षयाहश्राद्धे पार्वणमनुष्ठेयं तेनैव पुत्रेण स्वमातामहानां क्षयाहश्राद्धे एकोद्दिष्टं कर्तव्यमित्यर्थपरत्वेनानेकगोत्राणामित्यस्य मातामहपरत्वं किं न स्यादिति वाच्यम् । तथा सति दत्तकादिभिः स्वपितुः पालकस्य क्षयाहे एकोद्दिष्टं कर्तव्यमित्यर्थात्यन्ताप्रतीत्या दत्तकेनापि पालकक्षयाहे औरसपुत्रवत्पार्वणं कार्यमित्यर्थस्यैव प्राप्त्या 'पितुर्गतस्य देवत्वं तत्सुतस्य

त्रिपौरुषम् ' इत्येवमौरसशब्दस्थाने सामान्यतः सुतशब्दनिवेश एवोचितः । पितुर्जनकस्य पालकस्य वा, क्षयाहश्राद्ध इति शेषः । तत्सुतस्यौरसस्य दत्तकस्य वा पार्वणमिति तदर्थात् । ततश्चौरसपदोपादानं व्यर्थम् । तस्मात्पितुः क्षयाहे पार्वणकर्तरि पुत्रे वैशिष्ट्याकाङ्क्षोत्पादकौरसत्वविशेषणोपादानादनेकगोत्राणामित्यस्यौरसप्रतियोग्यनौरसदत्तकादिपुत्रपरत्वस्यैव युक्तत्वेन मातामहपरत्वाभावात् । किंच मातामहानां क्षयाह एकोद्दिष्टमिति न नियमः । मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः । तेषां तु पितृवच्छ्राद्धं कुर्युर्दुहितृसूनवः । इति मरीचिना त्रयाणां मातामहानां श्राद्धनिधानेन पार्वणावगमात् । अपि च पुत्रेण स्वपितुः क्षयाहे पार्वणं कर्तव्यमिति पितुर्गतस्य दैवत्वमिति वचनपूर्वार्धेन विहिते सति तेन पुत्रेण पितृव्यतिरिक्तस्य स्वमातामहस्य क्षयाहे पार्वणं न कार्यमित्यार्थिकपार्वणनिषेधप्रतीत्या परिशेषात्पार्वणाभाव एकोद्दिष्टमेव मातामहानामवशिष्यत इति मातामहानां क्षयाह एकोद्दिष्टं कार्यमित्यर्थकं ' सर्वत्रानेकगोत्राणाम् ' इत्युत्तरार्धं सुतरामवक्तव्यं स्यात् । तस्मान्मातामहानां क्षयाहे नैकोद्दिष्टविधायकमिदं किंतु दत्तकादीनामेव स्वपितुः पालकस्य क्षयाह एकोद्दिष्टविधायकमिति सर्वं रमणीयमिति । एतद्विषये विशेषविस्तरो दत्तकमीमांसायां मत्कृतायां तट्टीकायां चानुसंधेयः । अत्र युक्तायुक्तं सद्भिर्विचार्याङ्गीकरणीयम् । मया तु द्वावपि पन्थानौ यथामति विविच्य सतां पुरतः स्थापितावित्येतेत्यलं प्रसक्तानुप्रसक्तविचारेण ।

यदा तु पालकपितुरौरसः पुत्रो नास्ति तदा दत्तक एव पालकपितुरौर्ध्वदेहिकं प्रतिवार्षिकादिकं च सर्वं कुर्यादिति निर्विवादम् । ' पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः ' इति याज्ञवल्क्योक्तेरिति भावः । एवं द्विविधव्यामुष्यायणेन शुद्धेन चेति त्रिविधेनापि दत्तकेन जनकपितुः पुत्राद्यभाव और्ध्वदेहिकं सांवत्सरिकादिकं च श्राद्धं कर्तव्यम् । यत्राऽऽवयोरयमित्यभिसंधिना व्यामुष्यायणत्वं तत्र प्रायो दातुः पुत्रान्तरासद्भावः । अत एव स द्विपितेत्युच्यते । यत्राभिसंध्यभावस्तत्र दातुः प्रायः पुत्रान्तरसद्भावः । अत एवायं दत्तको न व्यामुष्यायणः किंतु शुद्ध इत्युच्यते । तत्र व्यामुष्यायणः प्रतिग्रहीतृपितृवज्जनकपितुरप्यौर्ध्वदेहिके सांवत्सरिकादिके चाधिकारीति युक्तमेव । ' पितुः पुत्रेण कर्तव्याः पिण्डदानोदकक्रियाः ' इत्यादिवचनादिति भावः । किंत्वभिसंधिना पुत्रदानादनन्तरं यदि जनकस्य पुत्रो जायेत तदा स एव जनकपितुः श्राद्धाधिकारी न तु दत्तकोऽभिसंहितोऽपि । पुत्रप्रतिग्रहादनन्तरं जायमानप्रतिग्रहीत्रौरसपुत्रवत् । यद्यपि व्यामुष्यायणे जनकनिरूपितौरसपुत्रत्वं ज्येष्ठत्वं चास्ति तथाऽपि परपुत्रत्वानाक्रान्तौरसपुत्रसमवाये परपुत्रत्वा-

कान्तौरसपुत्रत्वस्य ज्येष्ठत्वसहकृतस्यापि दुर्बलत्वेनासत्प्रायत्वाज्जनकपितृसंबन्धिपुत्रकार्यकारित्वाभावादिति भावः । शुद्धदत्तकस्थले यदि जनकस्य पुत्रान्तरासत्त्वं स्यात्तदा तेन जनकस्यापौर्ध्वदेहिकं सांवत्सरिकादिकं च कार्यम् । न च 'गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः । गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा' ( म० स्मृ० ९ । १४२ ) इति मनुना शुद्धदत्तकस्य जनकपितुर्गोत्ररिक्थपिण्डानां निवृत्त्यभिधानात्कथं शुद्धदत्तको जनकपितुः श्राद्धाधिकारीति वाच्यम् । जनकपितुः पुत्रान्तरसत्त्वविषयकत्वात्तदुक्तेः । सर्वेषामेकधर्माणाम्० इति बौधायनवचनेन, प्रवराध्याये दत्तकादिविशेषमनुपादाय जनकप्रतिग्रहीत्रोरुभयोः श्राद्धकर्तव्यताया अभिधानेन च शुद्धदत्तकस्यापि जनकपितुः श्राद्धादेरधिकारमात्रस्य कल्पनात् । यदि शुद्धदत्तकस्य कस्यामप्यवस्थायां जनकपित्रे पिण्डदातृत्वं न स्यात्तदा शुद्धदत्तकस्यापि बौधायनप्रोक्तक्षेत्रजधर्मातिदेशः प्रवराध्यायोक्तं जनकपालकोभयपित्रुद्देश्यकश्राद्धकर्तृत्वं चैते अनुपपन्ने स्याताम् । तस्मान्मनुप्रोक्तो यः शुद्धदत्तकस्य जनकपितृश्राद्धकर्तव्यतानिषेधः स जनकपितुः पुत्रान्तरसत्त्व एवेत्येवं संकोचस्यावश्यमङ्गीकरणीयत्वादिति ध्येयम् । तथा च जनकपालयोरुभयोः पित्रोः पुत्रान्तरासत्त्व उभयोरपि पित्रोरौर्ध्वदेहिकं सांवत्सरिकादिकं श्राद्धं च दत्तकः (द्व्यामुष्यायणः केवलो वा ) कुर्यात् । यद्युभयोरपि पुत्रान्तरसत्त्वं तदोभयोरपि न किमपि कुर्यादिति भावः । तत्रौरसादविभक्तेन दत्तकेन प्रतिग्रहीतुः प्रतिवार्षिकादिकमपि न पृथगनुष्ठेयम् । औरसानुष्ठितेनैव सांवत्सरिकादिना दत्तकस्य तत्तच्छ्राद्धफलभाक्त्वोपपत्तेः । औरसाद्विभक्तेन तु प्रतिसांवत्सरिकादिमात्रं पृथगनुष्ठेयमित्यादि पूर्वोक्तं न विस्मर्तव्यम् ।

नन्वेवं द्व्यामुष्यायणादस्य को विशेष इति चेदुभयोरयं पुत्र इति संकल्पबलाद्द्व्यामुष्यायणस्य द्विपितृकत्वम् । अस्य तु तादृशसंकल्पाभावात्प्रतिग्रहीत्रेकपितृकत्वम् । द्विपितृकत्वादेव च द्व्यामुष्यायणे जनकपितृनिरूपितौरसपुत्रत्वं जनकगोत्रसंबन्धश्च भवति । शुद्धदत्तके तु द्विपितृकत्वाभावादेव जनकपितृनिरूपितौरसपुत्रत्वनिवृत्तिर्जनकगोत्रनिवृत्तिश्च भवतीति विशेषः । तेन द्व्यामुष्यायणस्य पितुः क्षयाहश्राद्धे 'औरसक्षेत्रजौ पुत्रौ०' इति जातूकर्ण्युक्तः पार्वणविधिर्भवति । शुद्धे त्वौरसपुत्रत्वनिवृत्तेर्न पार्वणविधिः किंतु 'कुर्युरेकोद्दिष्टं सुता दश' इत्येकोद्दिष्टविधिः । तथाऽभिवादनश्राद्धादौ द्व्यामुष्यायणस्य गोत्रद्वयोच्चारः । शुद्धस्य त्वेकगोत्रस्यैवोच्चारः । विवाहे तु शुद्धस्यापि दत्तकस्य गोत्रद्वयपरिपालनं भवतीत्यन्यदेतत् ।

व्यामुष्यायणस्येतिकर्तव्यतायां विशेषमाह सांख्यायनसूत्रम्—'पिण्डान्यथावनेजनं निधायोभावेकस्मिन्पिण्डे पितृभेदे' इति। पितृभेद एकस्मिन्पिण्डे उभौ जनकग्रहीतारौ कीर्तयेदिति शेषः। प्रवराध्याये पितृव्येण चैककार्यंजातास्ते परिग्रहीतुरेव भवन्ति। अथ यद्येषां भार्यास्वपत्यं न स्यात्तदा रिक्थं हरेयुः पिण्डं तेभ्यस्त्रैपुरुषिकं दद्युः। यद्यपि स्यादुभाभ्यामेव दद्युरित्याचार्यवचनम्। द्वे श्राद्धे कुर्यादेकश्राद्धे वा पृथगनूद्दिश्यैकपिण्डे वा द्वावनुकीर्तयेत्प्रतिग्रहीतारं चोत्पादयितारमा तृतीयात्पुरुषादिति।

---

अथ व्यामुष्यायणेन जनकपालकयोरुभयोः पित्रोः कर्तव्यश्राद्धविषये कंचिद्विशेषं सांख्यायनसूत्रोक्तं प्रदर्शयन्नाह—पिण्डान्यथावनेजनमिति। अवनेजनं नाम श्राद्धे पिण्डप्रदानार्थमास्तृतकुशोपरि सेचनम्। पितरः शुन्धन्तां, पितामहाः शुन्धन्तामित्यादिमन्त्रैरिति शेषः। पितृभेदे—जनकपालकलक्षणपितृद्वित्वे सतीत्यर्थः। अवनेजनानुसारेण पिण्डान् कुशोपरि निधायैकस्मिन् पिण्डे द्वौ जनकप्रतिग्रहीतारौ पितरौ नामतः कीर्तयेत्। द्वावुद्दिश्यैकमेव पिण्डं दद्यादिति सांख्यायनसूत्रस्यार्थः। पितृव्येण चैककार्यंजाता इति। आवयोरयं पुत्र इति जनकपितुरभिसंधानाभावपूर्वकं पितृव्येण पितुर्भ्रात्रा ये गृहीतास्ते परिग्रहीतुरेव पुत्रा भवन्ति। अतः परिग्रहीतुरेकस्यैव पिण्डोदकादि कार्यं कुर्वन्ति। परं यद्युत्पादकानां भार्यास्वपत्यं पुमपत्यं न स्यात्तदोत्पादकानां रिक्थं ते पुत्रा हरेयुरथ चोत्पादकानां त्रैपुरुषिकं श्राद्धं कुर्युः। यद्युत्पादकानां भार्यासु पुमपत्यं स्यात्तथाऽप्युभाभ्यां जनकपालकपितृभ्यां श्राद्धं दद्युरिति प्रवराध्याय आचार्यभाषितमस्ति। एतस्य प्रवराध्यायग्रन्थस्य क्षेत्रजपुत्रपरत्वं केचिद्वर्णयन्ति। तदित्थम्—पितृव्येणैकस्य स्वभ्रातुः पिण्डोदकनामसंकीर्तनादिकार्यार्थं ये जाता उत्पादितास्ते परिग्रहीतुः क्षेत्रिण एव पुत्रा भवन्ति। परंतु यद्युत्पादकानां भार्यासु पुमपत्यं न स्यात्तदा ते क्षेत्रजपुत्रा उत्पादकानां द्रव्यं हरेयुरथ च तेषां त्रैपुरुषिकं नाम पार्वणश्राद्धं कुर्युः। यद्युत्पादकानां भार्यासु पुमपत्यं स्यात्तथाऽप्युभाभ्यां जनकपालकपितृभ्यां श्राद्धं देयमिति। अत्र यद्यपत्यं स्यादित्यपत्यसद्भावः क्रियानियमसद्भावस्याप्युपलक्षणम्। ततश्च यद्यपत्यं स्यात्तावाप्ययं पुत्र इति क्रियानियमश्च स्यात्तदोभाभ्यां देयमित्यर्थः। उभाभ्यां देयमित्युक्तं तत्प्रकारं कथयति—द्वे श्राद्धे इति। जनकपालकयोर्द्वे श्राद्धे कुर्यात्। द्वयोः पृथक् श्राद्धं कुर्यादित्यर्थः। अथवैकश्राद्धे द्वयोः पृथङ्निर्देशं कृत्वा द्वौ पिण्डौ दद्यात्। किंवैकं पिण्डं गृहीत्वा ग्रहीतुर्जनकस्य चेति द्वयोर्नाम कीर्तयेत्। आ तृतीयात्पुरुषादिति। यथा दत्तकेन जनकपालकौ द्वौ पितरावुद्दिश्य श्राद्धं क्रियते

ग्रहीतुः क्रियानियमाभावे पुत्रान्तराभावे च तस्यैव । क्रियानियमेऽप्यसद्भावे च द्विपितृकत्वमित्यर्थः । अत्र श्राद्धभेदाभेदयोर्विकल्पः ।

---

तथा दत्तकपुत्रेणापि दत्तकजनकस्य पुत्राद्यभावे स्वपितरं पितामहद्वयं प्रपितामहद्वयं चोद्दिश्य श्राद्धं कार्यमिति प्राक्प्रतिपादितमित्यर्थः । अत्रोदाहरणं यथा—मैत्रो दत्तकः । अस्य जनककुलीयपितृपितामहप्रपितामहाः—चैत्रवैशाखज्येष्ठाः । प्रतिग्रहीतृकुलीयास्तु—आषाढश्रावणभाद्रपदाः । तत्र चैत्रस्याऽऽषाढस्य च पुत्रान्तरं नास्तीति कृत्वा मैत्रेण जनककुलीयं चैत्रं प्रतिग्रहीतृकुलीयमाषाढं चेति द्वौ पितरावुद्दिश्य तथा वैशाखश्रावणौ पितामहौ, ज्येष्ठभाद्रपदौ प्रपितामहौ चेति षडुद्दिश्य श्राद्धं कृतम् । दत्तकपुत्रो विष्णुः । तेन स्वपितरं मैत्रमेकं, प्रतिग्रहीतृकुलीयं पितामहमाषाढं जनककुलीयपितामहं चैत्रं चेति पितामहद्वयं, तथा कुलद्वयीयं श्रावणं वैशाखं चेति प्रपितामहद्वयं चेति पञ्चोद्दिश्य श्राद्धं कर्तव्यम् । दत्तकपौत्रो हरिः । तेन स्वपितरं विष्णुमेकं स्वपितामहं दत्तकं मैत्रमेकं स्वकुलीयं प्रपितामहमाषाढं जनककुलीयं प्रपितामहं चैत्रं चेति प्रपितामहद्वयं चेति चतुर उद्दिश्य श्राद्धं कार्यमिति । प्रवराध्यायपठितस्याऽऽचार्यवचनस्यार्थं स्वयमेव प्रदर्शयति—ग्रहीतुः क्रियानियमाभाव इत्यादि । तवाप्ययं पुत्र इति ग्रहीत्रा नियमाकरणे ग्रहीतुः पुत्रान्तराभावे च सति योऽसौ परिगृहीतः स परिग्रहीतुरेव पुत्रो भवति न तत्र दातृनिरूपितपुत्रत्वमित्यर्थः । गृहीतस्य परिग्रहीतुरेव पुत्रत्वे दण्डचक्रन्यायवत्क्रियानियमाभावः पुत्रान्तराभावश्चेत्युभयं मिलितं कारणमित्युक्तं भवति । तेन ग्रहीतुः ( ममाप्ययं पुत्र इति ) क्रियानियमाभावे पुत्रान्तरसत्त्वे च दातुरेव स पुत्रो न परिग्रहीतुरिति सिध्यति । तवाप्ययं पुत्र इति ग्रहीत्रा नियमे कृतेऽथ च ग्रहीतुः पुत्रान्तरसत्त्वे गृहीतोऽसौ द्वयोः पुत्रो व्यामुष्यायणो भवतीति तात्पर्यार्थः । अत्र 'एककार्यजाताः' इति पदेनाभिसंधानाभावः—क्रियानियमाभावः प्रदर्शितः । 'एषां भार्यास्वपत्यं न' इत्यनेन ग्रहीतुः पुत्रान्तराभावश्चोक्तः । अत्र श्राद्धभेदाभेदयोरिति । 'द्वे श्राद्धे कुर्यादेकश्राद्धं वा पृथगुद्दिश्य' इत्यभिहितः श्राद्धभेदाभेदयोर्यो विकल्पः स व्यवस्थितो बोद्धव्यो न त्वैच्छिकः । तस्याष्टदोषदुष्टत्वात् । अष्टौ दोषाश्च—प्रमाणत्वाप्रमाणत्वे परित्यागप्रकल्पने । प्रत्युज्जीवनहानिभ्यामष्टौ दोषाः प्रकीर्तिता इत्यभियुक्तोक्ताः । तथा हि—द्वे श्राद्धे कुर्यात्, एकश्राद्धं वा, इति वाक्यद्वयमपि प्रमाणम् । तत्र श्राद्धद्वयविधायकेन एकश्राद्धवाक्यमनाश्रयणीयं स्यात् । श्रुतेनैरपेक्ष्याविरोधायुगपदुभयानुष्ठानायोगात् । अत एकश्राद्धवाक्यस्थं प्रमाणत्वं हेतुभूते त्याज्यं, तस्य स्वकप्रमाणत्वस्याप्रमाणत्वमेवम् । केनापि हेतुना प्रयोगाद्भ्रान्त्यैक-

न चेदं क्षेत्रजविषयम् । सत्याषाढेन दत्तकादीनां व्यामुष्यायणवदिति सूत्रेण दत्तकेऽपि तद्धर्मातिदेशात् । तथा हारीतः—तेषामुत्पादयितुः प्रथमं प्रवरो भवति । द्वौ द्वौ पिण्डौ निर्वपेदेकपिण्डे वा द्वावनुकीर्तयेद्द्वितीये पुत्रः । तृतीये पौत्रः । लेपिनस्त्रीन्वाऽऽचक्षाण आ सप्तमादित्येक इति ।

---

श्राद्धवाक्याङ्गीकारे त्यक्तप्रमाणत्वस्य पुनराश्रयणं तन्निरासेन स्वीकृताप्रमाणत्वस्य पुनस्त्यागश्चेत्येकस्मिन्नेकश्राद्धवाक्ये चत्वारो दोषाः । द्वितीयेऽपि वाक्ये प्राप्तत्यागाप्राप्ताश्रयणत्यक्तस्वीकारप्राप्तत्यागा इति त एव दोषा भवन्ति । तथा हि—एकश्राद्धवाक्याश्रयणे श्राद्धद्वयवाक्यमनाश्रयणीयम् । श्रुतनैरपेक्ष्यविरोधाद्युगपदुभयानुष्ठानायोगात् । श्राद्धद्वयानुष्ठान एकश्राद्धानुष्ठाने वा परस्परयोरपेक्षा नास्तीति कृत्वा स्वेच्छया यदि युगपदुभयानुष्ठानं क्रियेत तर्हि श्रुतनैरपेक्ष्यविरुद्धं स्यादिति युगपदुभयमनुष्ठातुमशक्यमेवेत्यर्थः । अतः श्राद्धद्वयवाक्यस्थं प्रमाणत्वं हेतुमन्तरेण त्याज्यं, तस्य त्यक्तप्रमाणत्वस्य चाप्रमाणत्वमेष्टव्यम् । केनापि कारणेन प्रयोज्ञागत्वेन श्राद्धद्वयवाक्याङ्गीकारे त्यक्तप्रमाणत्वस्य पुनराश्रयणं तन्निरासेन स्वीकृताप्रमाणत्वस्य पुनस्त्यागश्चेति त एव चत्वारो दोषाः । एवमष्टदोषदुष्टत्वान्नैच्छिको विकल्पः, किंतु व्यवस्थित एव । व्यवस्था च शक्ताशक्तभेदेन । शक्तेन श्राद्धद्वयं कार्यमशक्तेन त्वेकश्राद्धमिति । नन्वयं नियमः क्षेत्रजपुत्रविषय एवेत्याशङ्का न कार्या । यतः सत्याषाढेन 'दत्तकादीनां व्यामुष्यायणवत्' इति सूत्रेण दत्तकेऽपि क्षेत्रजधर्मातिदेशस्याभिहितत्वात् ।

तेषामुत्पादयितुरिति । तेषां पितॄणां मध्य उत्पादयितुः—बीजिनः प्रथममार्षेयं प्रवरो भवति । द्वितीयमार्षेयं—प्रवरः क्षेत्रिणो बोध्य इति द्विप्रवरत्वमुक्तम् । यदि द्विपिता स्यात्तदा जनकपालकपितृभ्यां प्रत्येकमेकैकमिति पिण्डौ दद्यात् । एवं जनकपालककुलस्थाभ्यां पितामहाभ्यां प्रपितामहाभ्यां च द्वौ द्वौ पिण्डौ दद्यात् । अत एव 'द्वौ द्वौ' इति वीप्सा निर्दिष्टा । 'एकस्मिन् पिण्डे' अत्रैकैकस्मिन्निति वीप्साऽध्याहार्या । 'एकैकस्मिन्नेव द्वौ द्वौ' इत्यापस्तम्बवचनात् । ततश्चैकैकस्मिन् पिण्डे वा जनकपालककुलजातौ पितरौ पितामहौ प्रपितामहौ चेति द्वौ द्वौ कीर्तयेत । पितृद्वयं पितामहद्वयं प्रपितामहद्वयं चोद्दिश्य प्रत्येकमेकैकमिति त्रीन् पिण्डान् दद्यादित्यर्थः । व्यामुष्यायणस्य पुत्रः स्वपितुः श्राद्धे प्रथमे पितृपिण्डे स्वपितरमेकमेव कीर्तयेत् । द्वितीये पितामहपिण्डे तु स्वकुलजं पितामहं, स्वजनकस्य व्यामुष्यायणस्य जनककुलस्थं स्वपितामहं चेति पितामहद्वयं कीर्तयेत् । तथा तृतीये प्रपितामहपिण्डे स्वकुलजं प्रपितामहं, स्वजनकस्य व्यामुष्यायणस्य जनककुलस्थं स्वप्रपितामहं चेति प्रपितामहद्वयं कीर्तयेत् ।

तेषां पितॄणां मध्ये बीजिनः प्रथममार्षेयं क्षेत्रिणो द्वितीयमिति द्विप्रवरता । एकपिण्डे वेत्यत्र वीप्साध्याहारः । यदि द्विपिता स्यादेकैकस्मिन्नेव द्वौ द्वावुपलक्षयेदित्यापस्तम्बवचनात् । द्वितीये पितामहपिण्डे व्यामुष्यायणस्य पुत्रः । तृतीये प्रपितामहपिण्डे व्यामुष्याणस्य पौत्र इति ।

---

व्यामुष्यायणस्य पौत्रस्तु स्वपितुः श्राद्धे प्रथमे पितृपिण्डे स्वपितरमेकं द्वितीये पितामहपिण्डे स्वपितामहमेकं संकीर्त्य तृतीये प्रपितामहपिण्डे स्वकुलस्थं प्रपितामहं, स्वपितामहस्य व्यामुष्यायणस्य जनककुलस्थं स्वप्रपितामहं चेति प्रपितामहद्वयं संकीर्तयेत् । एवं दत्तकमारभ्य तृतीयपर्यन्तेन दत्तकपौत्रपर्यन्तेन स्वस्वपितुः श्राद्ध एकैकस्मिन् पिण्डे निरुक्तरीत्या द्वौ द्वौ संकीर्त्यौ । अत्र दत्तकतत्पुत्रतत्पौत्रैर्व्यामुष्यायणस्य जनककुलस्थपितृपितामहप्रपितामहानामपत्यपत्न्याद्यभावे पालककुलस्थैः पितृपितामहप्रपितामहैः सहोल्लेखः कार्यो न त्वपत्यादिसत्त्व इति बोध्यम् ।

अथवा प्रपितामहात्परे त्रयो लेपभाजस्तत्तृप्तये पिण्डदर्भमूले हस्तलेपनिमार्जनसमय एकैकस्मिन्निमार्जने पालककुलस्थमेकं व्यामुष्यायणस्य जनककुलस्थं चैकमिति द्वौ द्वौ लेपभाजावुद्दिश्य हस्तं निमृज्यात् । तदुक्तं मनुना—'तेषु दर्भेषु तं हस्तं निमृज्याल्लेपभागिनाम्' इति । हस्तलेपाभावेऽपि हस्तं निमृज्यादेवेति मेधातिथिराह । मात्स्येऽपि—'लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः' इति । एवमुक्तप्रकारेण सप्तमपुरुषपर्यन्तं पिण्डभागिपुरुषत्रयं लेपभागिपुरुषत्रयं च कीर्तयेदित्येक आचार्या मन्यन्त इत्याह हारीतः । दत्तकप्रपौत्रस्य द्वये हि लेपिनः संभवन्ति । स्वकुलजाः प्रपितामहात्परे त्रयश्चैत्रवैशाखज्येष्ठनामान एके । अपरे च स्वप्रपितामहस्य व्यामुष्यायणस्य जनककुलस्थाः पितृपितामहप्रपितामहा आषाढश्रावणभाद्रपदनामकाः । यथा व्यामुष्यायणस्य पालककुलजा जनककुलजाश्चेति द्वये पितृपितामहप्रपितामहास्तद्वत् । अत्रोदाहरणम्—व्यामुष्यायणदत्तको मैत्रः । तत्पुत्रश्चैत्रः । तत्पौत्रो विष्णुः । तत्प्रपौत्रो हरः । तत्र दत्तकप्रपौत्रो हरः स्वपितुः श्राद्धे प्रथमादिपिण्डत्रये पितृपितामहप्रपितामहान् विष्णुचैत्रमैत्रान् क्रमेणैकैकमुद्दिश्य हस्तलेपदानसमये स्वप्रपितामहस्य दत्तकस्य पालकपितरं चैत्रं, तथा स्वप्रपितामहस्य दत्तकस्य जनकपितरमाषाढं चेति द्वौ लेपिनौ । एवं स्वकुलजं द्वितीयलेपिनं वैशाखं, स्वप्रपितामहस्य व्यामुष्यायणस्य जनककुलजं द्वितीयलेपिनं श्रावणं चेति द्वौ लेपिनौ । तथा स्वकुलजं तृतीयलेपिनं ज्येष्ठं, स्वप्रपितामहस्य व्यामुष्यायणस्य जनककुलस्थं तृतीयलेपिनं भाद्रपदं चेति द्वौ लेपिनौ । एवं द्वौ द्वौ लेपिनावुद्दिश्य हस्तलेपोदकं दद्यात् । एवं दत्तकप्रपौत्रस्य पुत्रः स्वपितुः श्राद्धे प्रथमे निमार्जने स्वकुलस्थं प्रथमलेपिनं मैत्रं दत्तकमेकमेवोल्लिख्य द्वितीयं निमार्जने स्वकुलस्थं द्वितीयलेपिनं चैत्रं, प्रथमलेपिनो व्यामुष्यायणस्य जनक-

यदि तु ग्रहीता प्रथमं मृतस्तदा तस्मै दद्यात्। अथ यदि जनकस्तदा जनकाय। यद्युभौ तदाऽऽदौ जनकाय पश्चाद्ग्रहीत्रे दद्यादित्याह मरीचिः—

सगोत्रादन्यगोत्राद्वा यो भवेद्विधवासुतः।
पिण्डं श्राद्धविधानं च क्षेत्रिणे प्राक्प्रदापयेत्॥
बीजिने तु ततः पश्चात्क्षेत्री जीवति चेत्क्वचित्।
बीजिने दद्युरादौ तु मृते पश्चात्प्रदीयते॥

पितरमाषाढं चेति द्वौ लेपिनौ कीर्तयेत्। एवं तृतीयनिमार्जने स्वकुलस्थं तृतीयलेपिनं वैशाखं, द्व्यामुष्यायणस्य जनककुलस्थं लेपिनं श्रावणं चेति द्वौ लेपिनौ कीर्तयेत्। दत्तकप्रपौत्रस्य पौत्रस्तु स्वपितुः श्राद्धे प्रथमे द्वितीये च निमार्जने स्वकुलस्थं क्रमेण प्रथमलेपिनं मैत्रं द्वितीयलेपिनं चैत्रं चैकमेवोल्लिख्य तृतीये निमार्जने स्वकुलस्थं तृतीयलेपिनं वैशाखं द्व्यामुष्यायणस्य जनककुलस्थं लेपिनमाषाढं चेति द्वौ लेपिनौ कीर्तयेदिति। 'लेपिनस्त्रीन्वाऽऽचक्षाणः०' इत्यस्यायमीदृशोऽर्थो मया कल्पनया लिखितः। पिण्डदानविधिवदत्रान्यत्र वा निर्णयसिन्ध्वादौ न केनापीदं सूत्रं व्याख्यातम्। नापि वा श्राद्धप्रयोगपुस्तकेषु लेपदानप्रकारो वर्णितः। केवलं लेपभावतृप्तये दर्भमूले हस्तं निमृज्यादित्येवोक्तं दृश्यते। अतो निरुक्तोऽर्थो युक्तश्चेद्ग्राह्य इत्यभ्यर्थये।

यदि ग्रहीता प्रथमं मृतः, जनकस्तु जीवति तदा द्व्यामुष्यायणः पालकपितुः श्राद्धं कुर्यात्। जनकपितरि जीवत्यपि द्व्यामुष्यायणः पालकपितुः श्राद्धाधिकारी भवतीत्यर्थः। यदि जनकः पिता प्रथमं मृतः, अर्थात् पालकः पिता जीवति तदा द्व्यामुष्यायणो जनकपितुः श्राद्धं कुर्यात्। पालकपितरि जीवत्यपि द्व्यामुष्यायणो जनकपितुः श्राद्धाधिकारी भवतीत्यर्थः। यद्युभावपि जनकपालकपितरौ मृतौ तदाऽऽदौ जनकपित्रे पश्चाच्च पालकपित्रे श्राद्धं दद्यादिति मरीचिराह। मरीचिप्रोक्तेऽर्थे प्रमाणं वचनमुदाहरति—सगोत्रादन्यगोत्राद्वेति। समानगोत्राद्भिन्नगोत्राद्वा पुरुषाद्यो विधवायां सुतो भवेत्स आदौ क्षेत्रिणे पिण्डं श्राद्धं च दद्यात्। अत्र क्षेत्री मृत इति स्पष्टमेवोक्तम्। तेन बीजी जीवतीति प्रतीयते। यद्यपीदं क्षेत्रजपुत्रविषयत्वेनोक्तं तथाऽपि दत्तकविषयत्वेनापि योजयितुं शक्यम्। तद्यथा—सगोत्राद्भिन्नगोत्राद्वा गृहीतो यः सुतः स विधवायाः सुतः स्यादर्थाद्ग्रहीता मृतश्चेत्स विधवायाः सुत इत्युच्यतेत्यर्थः। अनेन ग्रहीता मृतो दाता तु जीवतीति स्फोरितम्। सोऽयं विधवायाः सुत आदौ मृताय ग्रहीत्रे पिण्डं श्राद्धादिकं च दद्यात्पश्चान्मृताय जनकाय दद्यादिति भावः। क्षेत्री जीवतीति। बीजिने दद्युः

उभौ यदि मृतौ स्यातां बीजिन्यादौ सदा ददेत् ।
क्षेत्रिण्यादौ न दत्तं स्याद्बीजिने नोपतिष्ठते ॥ इति ।
एतेनैकतरोपरतावपि द्विपितृकस्य पार्वणं दर्शितम् । तथा तुल्यन्यायेन मा-

रिति । यदा च प्रसवशक्तिहीने क्षेत्रिणि जीवति सति तदाज्ञया तत्क्षेत्रे सगोत्रेणेतरेण वा य उत्पादितः सुतः स बीजिने जनकाय पिण्डश्राद्धादिकं प्रथमं दद्यात् । पश्चान्मृते क्षेत्रिणि तस्मा अपि दद्यात् । अनेन बीजी प्रथमं मृतः पश्चात्क्षेत्री मृत इति स्फोरितम् । ततश्च जनकः प्रथमं मृतः पश्चात्तु ग्रहीता मृतस्तादृशस्थले जनकायाऽऽदौ पिण्डादिकं दद्यात्पश्चाद्ग्रहीत्रे दद्यादित्यर्थः सिद्धः । उभौ यदीति । यदि क्षेत्रिबीजिनावुभावपि मृतौ स्यातां तर्हि प्रथमतो बीजिने दद्यान्न क्षेत्रिणे । यत्कारणं यदि च क्षेत्रिणे प्रथमं दद्यात्तदा पश्चाद्बीजिने दीयमानं श्राद्धादिकं नोपतिष्ठते बीजिनं न प्राप्नोतीति । एतद्वचनानुसाराद्व्यामुष्यायणः प्रथमं जनकाय श्राद्धं दद्यात्पश्चाद्ग्रहीत्रे दद्यादित्यर्थः । 'बीजस्य चैव योन्याश्च बीजमुत्कृष्टमुच्यते' ( म० स्मृ० ९ । ३५ ) इति मनुना क्षेत्रापेक्षया बीजस्य प्राधान्याभिधानादिति भावः । एतेनैकतरेति । सगोत्रादन्यगोत्राद्वेति निरुक्तवचनेन जनकपालकयोरन्यतरस्य मरणेऽपि द्व्यामुष्यायणेन प्रतिग्रहीतुर्जनकस्य वा क्षयाहश्राद्धं पार्वणेन कर्तव्यमिति प्रदर्शितं भवति । मृतशब्दार्थोपादानात् । मृते सति श्राद्धं कर्तव्यमित्युक्त्या सिद्धसाध्यसमभिव्याहारन्यायेन मरणनिमित्तकं श्राद्धं क्षयाहश्राद्धमित्यर्थः फलति । व्यामुष्यायण औरसपुत्रत्वानिवृत्त्या 'औरसक्षेत्रजौ पुत्रौ विधिना पार्वणेन तु प्रत्यब्दं' कुर्युरिति शेषः । इति पार्वणविधिः प्रवर्तते । शुद्धदत्तके त्वौरसपुत्रत्वनिवृत्त्या न तत्र पार्वणविधिः प्रवर्तितुमुत्सहत इति । 'इतरे कुर्युरेकोद्दिष्टं सुता दश' इत्येकोद्दिष्टविधिरेवेति भाति । यद्यपि शुद्धदत्तकस्यापि जनकस्यापत्यान्तराद्यभावे तत्पिण्डदानादावधिकारोऽस्ति, तथाऽपि तस्य जनकपितुः श्राद्धाद्यधिकारमात्रं कल्प्यते नत्वौरसत्वद्विगोत्रत्वादिकमपीत्येकोद्दिष्टविधिः शुद्धदत्तकविषय इति भावः । यश्च बौधायनेन 'सर्वेषामेकधर्माणाम्०' इति क्षेत्रजधर्मातिदेश उक्तः सोऽपि व्यामुष्यायण एवोपपद्यते न शुद्धदत्तके । एवं च शुद्धदत्तकस्योभयोरपि पित्रोः क्षयाहश्राद्धमेकोद्दिष्टमेव । व्यामुष्यायणस्य तूभयोः पित्रोः क्षयाहश्राद्धं पार्वणं फलतीत्याशयेनोक्तं 'एकतरोपरतावपि द्विपितृकस्य पार्वणं प्रदर्शितम्' इतीति भाति । इदानींतनशिष्टाचारे शुद्धदत्तकेनापि ग्रहीतुः क्षयाहश्राद्धे पार्वणमेवानुष्ठीयत इति दृश्यते ।

ऽयं पार्वणविधिर्व्यामुष्यायणस्याग्निमत्त्वे सत्येव बोध्यः । 'पार्वणेन विधानेन देय-

अभिमता सदा' इत्यनेनैकनाथत्वादित्युक्तमेव । एवं च द्व्यामुष्यायणेन जनकस्य प्रतिग्रहीतुर्वा यदा क्षयाहश्राद्धं कर्तुमिष्यते तदा द्वयोरपि कर्तव्यमेवेति सिध्यति । ग्रहीता पूर्वं मृतश्चेत्तस्मै पूर्वं दत्त्वा पश्चान्मृताय जनकाय पिण्डादि देयम् । जनकः प्रथमं मृतश्चेत्तस्मै पूर्वं दातव्यं पश्चान्मृताय ग्रहीत्रे दद्यात् । यद्युगपदुभौ मृतौ तदा बीजस्य प्राधान्याज्जनकाय प्रथमतो दत्त्वा पश्चाद्ग्रहीत्रे दद्यादित्युक्तत्वात्पूर्वोक्तो नियमः फलतीति भावः । तथा च सहितयोरेतयोः श्राद्धयोरैकरूप्येणैव प्रवृत्तिरुचितेति द्व्यामुष्यायणस्योभयोरपि पित्रोः क्षयाहश्राद्धं पार्वणं भवति । अन्यथा द्व्यामुष्यायणविषयेऽप्येकोद्दिष्टविधिप्रवृत्तौ तु जनकस्य पार्वणं प्रतिग्रहीतुस्त्वेकोद्दिष्टमिति वैरूप्येण 'एकतरोपरतावपि द्विपितृकस्य पार्वणं प्रदर्शितम्' इति । 'औरसक्षेत्रजव्यतिरिक्तानां (दत्तसुतानां) तु साग्निनिरग्निसाधारणनामेकोद्दिष्टमिति सिद्धम्' इति च स्वोक्तमसंगतं स्यादिति ज्ञेयम् ।

अत्रेदं बोध्यम्—ग्रहीता प्रथमं मृतः पश्चाच्च जनकस्तत्र ग्रहीत्रे पूर्वं श्राद्धं दत्त्वा पश्चाज्जनकाय देयमिति श्राद्धदानक्रमबोधने नाऽऽग्रहः । किंतु यदा यस्य पितुः श्राद्धं प्रसक्तं तदा तस्य करणीयम् । द्वितीयस्य प्रसक्तं चेत्तदपि करणीयमित्येव बोधने तात्पर्यम् । उभौ यदि मृतौ० इत्यनेनोभयोर्मरणे श्राद्धदानक्रमविचारः कृतः । अर्थादितः पूर्वस्मिन् वाक्य उभयोर्मरणप्रयुक्तविचारो नास्ति । किंत्वेकस्यैव मरणे विचारः कृतः प्रतीयते । स च यः पूर्वं मृतस्तस्मै दद्यादित्येव । द्वितीयस्य मरणं विना क्रमानुपपत्तेस्तद्विचारानवकाशात् । अतो मरीचिना 'यदि ग्रहीता प्रथमं मृतस्तदा तस्मै दद्यात्' इत्येवोक्तम् । किंचोभौ मृतावित्यत्र युगपदित्यध्याहारे न किंचित्प्रमाणम् । उभयोः क्रमेण मरणेऽपि द्वितीयमरणोत्तरमुभौ मृताविति व्यवहारस्य सुवचत्वात् । ततश्च क्षेत्रिणे प्राक् प्रदापयेत्, बीजिने तु ततः पश्चात्, बीजिने दद्युरादौ तु, इत्यादीनि कथमिव श्राद्धदानक्रमं बोधयेयुः । तेन ग्रहीतृमरणोत्तरं कियद्भिरपि वत्सरैर्जनकमरणेन द्वयोः श्राद्धप्रसक्तौ प्रथमं कस्मै देयमित्याकाङ्क्षायां 'उभौ यदि मृतौ स्याताम्' इति वचनानुसाराद्युगपन्मरणवत्क्रमेण मरणेऽपि जनकायाऽऽदौ पश्चाद्ग्रहीत्रे दद्यादिति सिध्यति । यद्येतादृशस्थले ग्रहीत्रे प्रथमं दत्त्वा पश्चाज्जनकाय दीयेत तर्हि तज्जनकाय नोपतिष्ठत इति निषेध आपतेदिति भाव इति ।

एवं पितृवज्जनकपालकलक्षणमातृभेदे सति द्व्यामुष्यायणस्य 'पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम्' इति वचनाद्यस्मिञ्श्राद्धे दर्शादौ मातामहपार्वणपूजनं प्रसज्यते तत्र किं जनन्या मातुः पित्रादिभ्यः प्रथमतो देयमथवा ग्रहीत्र्या मातुः पित्रादिभ्य इति जिज्ञासायां 'क्षेत्रिण्यादौ न दत्तं स्याद्बीजिने नोप-

तृभेदेऽपि व्यामुष्यायणदत्तकस्य पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवमित्यनेन प्राप्तपितामहश्राद्धे जननीपितॄणां प्रथमनिर्देशस्ततः प्रतिग्रहीत्री या माता तत्पितॄणाम् ।

शुद्धदत्तकस्य तु प्रतिग्रहीत्र्या एव मातुः पित्रादिपिण्डदानम् । तस्य तन्मात्रस्वधाकरत्वादिति । एवं च स हि संतानाय पूर्वेषामिति हेतुवन्निगदस्वरसान्नैकं पुत्रं दद्यादिति निषेधो व्यामुष्यायणातिरिक्तविषयः । संतानविच्छेदाभावादित्युक्तमेव ।

अथास्य सापिण्ड्यम् । जनककुलेऽवयवान्वयेन प्रतिग्रहीतृकुले च पिण्डान्वयेन त्रिपौरुषम् । यदाह कार्ष्णाजिनिः—

तिष्ठते ' इति न्यायेन जनन्या मातुः पित्रादिभ्यः प्रथमतः श्राद्धं देयं पश्चाद्ग्रहीत्र्या मातुः पित्रादिभ्य इत्याह—तथा तुल्यन्यायेनेत्यादि । पिण्डभेदपक्षे जनन्या मातुः पित्रादित्रिभ्यः प्रथमतः पिण्डान् दत्त्वा पश्चाद्ग्रहीत्र्या मातुः पित्रादिभ्यः पिण्डा देयाः । एकपिण्डपक्षे तु जनन्या मातुः पित्रादीनां प्रथमं निर्देशस्ततो ग्रहीत्र्या मातुः पित्रादीनामित्याशयः ।

शुद्धदत्तकस्य दर्शादिश्राद्धे मातामहपूजने प्रसक्ते ग्रहीत्र्या एव मातुः पितृपितामहप्रपितामहाः पूज्याः, न जनन्या मातुः । तस्य प्रतिग्रहीत्रेकपुत्रत्वेन प्रतिग्रहीत्रोरेव मातापित्रोः स्वधाकरत्वादित्यर्थः । यद्यपि जनकपितुरपत्यान्तरासत्त्वे तच्छ्राद्धादावपि शुद्धदत्तकस्याधिकारोऽस्ति सांख्यायनप्रवराध्यायवचनात्तथाऽपि तद्वचनबलात्तयोः श्राद्धाधिकारेऽपि जनककुलीयमातामहश्राद्धाधिकारे प्रमाणाभावादिति भावः । एवं चेति । व्यामुष्यायणस्य द्विपितृकत्वे सति चेत्यर्थः । ' नैकं पुत्रं दद्यात् । स हि संतानाय पूर्वेषाम् ' यस्यैक एव पुत्रस्तेन स परस्मै न दातव्यः । यतः स संतत्यविच्छेदाय भवतीति हेतोः । यदि चैक एव पुत्रः स चापि परस्मै दत्तस्तर्हि स्वसंतानविच्छेदः स्यादतो नैकः पुत्रो दातव्यः, इति वसिष्ठोक्त एकपुत्रदाननिषेधः ' स हि संतानाय पूर्वेषाम् ' इति हेतुवचनस्वरसाद्व्यामुष्यायणातिरिक्तशुद्धदत्तकविषयकः । व्यामुष्यायणे जनकपितृनिरूपितपुत्रत्वानिवृत्तेः संतानविच्छेदाभावाच्छुद्धदत्तके जनकपुत्रत्वानिवृत्तेः संतानविच्छेदसंभवाच्चेति पूर्वमुक्तमेव प्रसङ्गतः पुनः स्मारितम् ।

अधुना दत्तकस्य सापिण्ड्यमुच्यते । तच्च जनककुले पालककुले च त्रीन् पुरुषानभिव्याप्य—पुरुषत्रयपर्यन्तमिति यावत् । अस्तीति शेषः । तत्र जनककुल एकशरीरावयवान्वयरूपं पालककुले तु पिण्डान्वयरूपमिति भेदः । दत्तकस्य जनक-

यावन्तः पितृवर्गाः स्युस्तावद्भिर्दत्तकादयः ।
प्रेतानां योजनं कुर्युः स्वकीयैः पितृभिः सह ॥
द्वाभ्यां सहाथ तत्पुत्राः पौत्राश्चैकेन तत्समम् ।
चतुर्थे पुरुषे छेदं तस्मादेषा त्रिपौरुषी ॥ इति ।

अस्यार्थः—दत्तकादयः पुत्राः प्रेतानां प्रतिग्रहीत्रादीनां पितॄणामौरसत्वे दत्तकत्वे द्व्यामुष्यायणत्वे वा यावन्तः पितृवर्गास्त्रयः षड् वा तावद्भिः सह तेषां योजनं सापिण्ड्यं कुर्युः । प्रतिग्रहीत्रादीनामौरसत्वे तत्पितृपितामहप्रपितामहास्त्रयः । दत्तकत्वे तत्प्रतिग्रहीतृपितृपितामहप्रपितामहास्त्रयः । द्व्यामुष्यायणत्वे तज्जनकास्त्रयः, तत्प्रतिग्रहीत्रादयस्त्रय इति षट् । एवं च दत्तकस्य स्वकर्तृके पार्वणे येषां देवतात्वं स्वपुत्रकर्तृकसापिण्डीकरणेऽपि तेषामेव तथात्वमिति ज्ञापितम् ।

---

मारभ्य प्रपितामहपर्यन्तं पुरुषत्रयं जनककुले, पालककुले तु दत्तकस्य पालकपितरमारभ्य जनकपितामहपर्यन्तं पुरुषत्रयं बोध्यम् । अत्रार्थे कार्ष्णाजिनिवचनं प्रमाणत्वेनोदाहरति—' यावन्तः पितृवर्गाः स्युः० ' इति । निरुक्तवचनार्थं स्वयमेव वर्णयन्नाह—अस्यार्थ इति । दत्तकादय इति । आदिपदात्कृत्रिमक्रीतपुत्रिकापुत्रा ग्राह्याः । दत्तकादिः पुत्रः प्रेतानां मृतानां प्रतिग्रहीत्रादिपितॄणामौरसत्वे शुद्धदत्तकत्वे द्व्यामुष्यायणत्वे वा यावन्तः पितृवर्गास्त्रयः षड् वा तावद्भिः सह तेषां योजनं सपिण्डनं कुर्यात् । तत्र प्रतिग्रहीत्रादीनामौरसत्व उदा०—चै० ( कश्चित् ) तस्य पुत्रः वै० । त० पु० ज्ये० । त० पु० आ० । त० पु० श्रा० ( दत्तकः ) । तत्र चै० आरभ्य आ० पर्यन्ताश्चत्वार औरसाः । अत्र दत्तकः श्रा०संज्ञकः स्वपितुरौरसस्य आ०संज्ञकस्य सपिण्डनं चिकीर्षुः स्वप्रतिग्रहीतुरा०संज्ञकस्य पितृपितामहप्रपितामहैः ज्ये० वै० चै० इत्याख्यैस्त्रिभिः सह सपिण्डनं कुर्यादिति । प्रतिग्रहीतुः स्वपितुः शुद्धदत्तकत्वे तत्परिग्रहीतृ–पितृपितामहप्रपितामहैः सपिण्डनं कुर्यात । यथा—चै० वै० ज्ये० इति त्रय औरसाः । चतुर्थः ज्ये० पुत्र आ० ( शुद्धदत्तकः ) । त० पु० श्रा० ( दत्तकः ) । अत्र दत्तकः श्रा० संज्ञः स्वपितुः प्रतिग्रहीतुः आ०संज्ञकस्य शुद्धदत्तकस्य सपिण्डीं कुर्वन् स्वपितुः परिग्रहीतुः आ०संज्ञकस्य पितृपितामहप्रपितामहैः ज्ये० वै० चै० संज्ञकैस्त्रिभिः सह सपिण्डनं कुर्यादिति । प्रतिग्रहीतुः स्वपितुर्द्व्यामुष्यायणत्वे तु तज्जनकादिभिस्त्रिभिस्तथा तत्प्रतिग्रहीत्रादिभिस्त्रिभिश्चेति मिलित्वा षड्भिः सह सपिण्डनं कुर्यात् । यथा—चै० वै० ज्ये० औरसाः । ज्ये० पुत्र आ० ( द्व्यामुष्यायणः ) । त० पु० श्रा० ( दत्तकः ) । अत्र दत्तकः श्रा०संज्ञकः प्रतिग्रहीतुः स्वपितुरा०संज्ञकस्य द्व्यामुष्यायणस्य

दत्तकस्य पुत्रास्तु दत्तकसपिण्डीकरणं तत्प्रतिग्रहीत्र। तत्पितॄणां त्रयाणां मध्ये द्वाभ्यां च सह कुर्युः। एवं च दत्तकस्य पौत्रा दत्तकप्रतिग्रहीतृभ्यां ग्रहीतुः पितॄणां त्रयाणां मध्य एकेन ग्रहीतुः पित्रेति यावत्तेन च समं तत्पितृसपिण्डनं कुर्युः ।

---

सपिण्डनं कुर्वन् व्यामुष्यायणस्य जनक-पितृपिताहप्रपितामहैः पौ० मा० का० इत्याख्यैस्तथा पालक-पितृपितामहप्रपितामहैः ज्ये० वै० चै० इत्याख्यैश्चेति संकलनया षड्भिः सह सपिण्डनं कुर्यादिति । ततश्च दत्तकस्य स्वकर्तृके पार्वणे येषां देवतात्वं दत्तकपुत्रकर्तृके सपिण्डनेऽपि तेषामेव देवतात्वमित्युक्तं भवति । यथा—चै० वै० ज्ये० एते त्रयः । ज्ये०पुत्र आ० ( दत्तकः ) । सोऽयं शुद्धश्चेत्तत्कर्तृके पार्वणश्राद्धे तत्पालक-पितृपितामहप्रपितामहानां ज्ये० वै० चै० इत्याख्यानां देवतात्वं भवतीति। *आनामकस्य दत्तकस्य पुत्रः श्रा०संज्ञकः। अत्र* श्रा०नामकेन दत्तकपुत्रेण स्वपितुः शुद्धदत्तकस्य आ०नामकस्य सपिण्डीकरणस्य तत्पालक-पितृपितामहप्रपितामहैः ज्ये० वै० चै० संज्ञकैः सह क्रियमाणत्वाद्दत्तककर्तृकपार्वणदेवतानामेव दत्तकपुत्रकर्तृकसपिण्डनदेवतात्वं भवतीति । एवमेव सोऽसावा० संज्ञको दत्तको व्यामुष्यायणश्चेत्तत्कर्तृके पार्वणश्राद्धे तज्जनकपित्रादित्रयाणां तत्पालकपित्रादित्रयाणां चेति षण्णां देवतात्वं भवतीति व्यामुष्यायणपुत्रकर्तृके सपिण्डनेऽपि तेषामेव षण्णां देवतात्वं भवतीति बोध्यम् ।

दत्तकपुत्रस्तु दत्तकसपिण्डीकरणं कुर्वन् दत्तक—पालकपित्राऽथ च दत्तकपालकपितुः पित्रादित्रयाणां मध्ये द्वाभ्यां मिलित्वा त्रिभिः सह योजनं कुर्यात् । यथा——चै० ( कश्चित् ) । त० पु० वै० । त० पु० ज्ये० । त० पु० आ० । त० पु० श्रा० ( शुद्धदत्तकः ) । त० पु० भा० इति । अत्र दत्तकपुत्रेण भा०नामकेन स्वपितुः शुद्धदत्तकस्य श्रा०नामकस्य सपिण्डीकरणे कर्तव्ये सति दत्तकस्य प्रतिग्रहीता य आ०संज्ञकस्तेन सहाथ च आ०संज्ञकस्य ये पित्रादित्रयः ज्ये० वै० चै० इत्याकारकास्तेषां मध्ये द्वाभ्यां ज्ये० वै० इत्याभ्यां च मिलित्वा आ० ज्ये० वै० इति त्रिभिः सह सपिण्डनं कार्यमिति । तथाऽत्रैव श्रा०दत्तकस्य व्यामुष्यायणत्वे सति स्वपितुर्व्यामुष्यायणस्य प्रतिग्रहीता य आ०संज्ञकस्तेन सहाथ च आ०संज्ञकस्य पितृपितामहाभ्यां ज्ये० वै० इत्याभ्यां, तथा व्यामुष्यायणस्य जनकपित्रा पौ०नामकेन सहाथ च पौ०नामकस्य जनकपितुः पितृपितामहाभ्यां मा० का० इत्याभ्यां सह मिलित्वा षड्भिः सपिण्डनं कार्यम् । व्यामुष्यायणस्य जनकपित्रादयो यथा——म०नामा कश्चित् । त० पु० का० । त० पु० मा० । त० पु० पौ० । अयमेव व्यामुष्यायणस्य श्रा०संज्ञकस्य

चतुर्थपुरुषे छेदमिति । यो यदा यत्सपिण्डीं करोति स तत्पित्रादिभिस्त्रिभिरेव करोतीति चतुर्थे विरामः सिद्ध एवेति तदारम्भः "सिद्धे सत्यारम्भो नियमार्थ"

---

जनकः पिता बोध्यः । तथा शुद्धदत्तकः श्रा० । दत्तकपुत्रः भा० । दत्तकपौत्रः आ० इति । अत्र दत्तकपौत्रेण आ०नामकेन स्वपितुर्दत्तकपुत्रस्य भा०नामकस्य सपिण्डने कर्तव्ये सति स्वपितामहप्रपितामहाभ्यां श्रा० आ० इत्याभ्यां सहाथ च आ०संज्ञकस्य पित्रादित्रयाणां ज्ये० वै० चै० इत्येषां मध्य एकेन ज्ये०संज्ञकेन सहेति मिलित्वा श्रा० आ० ज्ये० संज्ञकैस्त्रिभिः सपिण्डनं कार्यम् । दत्तकपौत्रकर्तृके सपिण्डने स्वपितामहप्रपितामहवृद्धप्रपितामहानां देवतात्वमिति भावः । दत्तकस्य व्यामुष्यणत्वे तु पूर्वोक्तैः स्वपितामहप्रपितामहवृद्धप्रपितामहैः श्रा० आ० ज्ये० संज्ञकैस्त्रिभिः सहाथ च व्यामुष्यायणस्य श्रा०संज्ञकस्य जनकपितृपितामहप्रपितामहैः पौ० मा० का० संज्ञकैस्त्रिभिश्चेति मिलित्वा षड्भिः सपिण्डनं कार्यमिति । व्यामुष्यायणपौत्रकर्तृके सपिण्डीकरणे स्वपितामहप्रपितामहवृद्धप्रपितामहानां तथा व्यामुष्यायणस्य जनकपितृपितामहप्रपितामहानां चेति षण्णां देवतात्वमिति भावः । व्यामुष्यायणस्य पुत्रपौत्रयोरौरसत्वे निरुक्तः सपिण्डनप्रकारो बोध्यः । व्यामुष्यायणस्य पुत्रपौत्रयोः क्रमेण व्यामुष्यायणत्वदत्तकत्वयोः सतोस्तु व्यामुष्यायणपौत्र आश्वि०नामको दत्तकः स्वपितुर्भा०संज्ञकस्य व्यामुष्यायणस्य सपिण्डनं कुर्वंस्तत्प्रतिग्रहीतृपितृपितामहप्रपितामहैः श्रा० आ० ज्ये० नामकैस्त्रिभिस्तथा भा०नामकस्य व्यामुष्यायणस्य जनकपितृपितामहप्रपितामहैस्त्रिभिश्चेति षड्भिः सपिण्डनं कुर्यात् । व्यामुष्यायणपितृकेण व्यामुष्यायणपौत्रेण दत्तकेन सता स्वपितुर्व्यामुष्यायणस्य सपिण्डने स्वपितुर्व्यामुष्यायणस्य जनक—पितृपितामहप्रपितामहाः कार्याः, नतु स्वपितामहस्य व्यामुष्यायणस्य जनक—पितृपितामहप्रपितामहाः पौ० मा० का० संज्ञकाः कार्या इत्यर्थः ।

नन्वेवं दत्तकप्रपौत्रः स्वपितुर्दत्तकपौत्रस्य सपिण्डनं कुर्वन् दत्तकपुत्रदत्तकतत्प्रतिग्रहीतृभिस्त्रिभिः सहैव कुर्यात् । ततश्च प्रतिग्रहीतुः प्राचीना ये त्रयः पितरस्तेषां मध्य एकस्यापि दत्तकप्रपौत्रकर्तृके सपिण्डने प्रवेशाभावेन दत्तकप्रपौत्रस्य सापिण्ड्यं न स्यादत आह—चतुर्थपुरुषे छेदमिति । अस्यायं भावः—यः स्वपितुः सपिण्डीं चिकीर्षति स स्वपितुः पितृपितामहप्रपितामहैस्त्रिभिरेव कुर्यान्न चतुर्थेनेति चतुर्थेन सपिण्डीकरणनिषेधः सिद्ध एव । त्रिभिरेव सपिण्डीकरणस्योक्तत्वात् । ततश्च चतुर्थे विरामः सिद्ध एव । सत्येवं यदत्र पुनः 'चतुर्थपुरुषे छेदम्' इत्यनेन चतुर्थेन सपिण्डीकरणनिषेधः क्रियते सः 'सिद्धे सत्यारम्भो नियमार्थः'

इति न्यायेन लेपिनां लेपनिरासेन सापिण्ड्यव्यवच्छेदार्थः । तदेषाऽऽह—तस्मा-देषेति । एषा सपिण्डता । तथा च—

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।

पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् ॥

इति मत्स्यपुराणोक्तसाप्तपौरुषसापिण्ड्यस्य सामान्यस्यानेन विशेषेण बाध एव । अत एव हारीतेन 'लेपिनस्त्रीन्वाऽऽचक्षाण आ सप्तमादित्येके' इति पक्षान्तरमुपन्यस्तं संगच्छते । तदेव संगृह्यान्यत्रोक्तम्—

दत्तकानां तु पुत्राणां सापिण्ड्यं स्यात्त्रिपौरुषम् ।

---

इति न्यायेन त्रिभिरेव सपिण्डनं कुर्यान्न चतुर्थेनेति नियमार्थः । यद्यपि चतुर्थेन सपिण्डीकरणं नैव प्रसज्यते त्रिभिरेव तत्करणस्योक्तेस्तथाऽपि त्रयाणामेव सपिण्डी-करणे संबन्धो न चतुर्थादीनामिति तत्तात्पर्यम् । चतुर्थादीनां संबन्धश्च सपिण्डी-करणे लेपभागित्वेन संबन्धेन संभवति । सोऽप्यनेन नियमेन व्यावर्त्यते । ततश्च लेपिनां लेपनिराकरणेन सापिण्ड्यनिषेधार्थः 'चतुर्थपुरुषे छेदम्' इति नियम इति भावः । एवं च लेपिनां सापिण्ड्यविच्छेदाद्दत्तकविषये त्रिपुरुषमेव सापिण्ड्-यमित्युक्तं भवति । तदेतदाह—तस्मादेषेति । औरसस्थले सपिण्डीकरणं त्रिभिरेव शास्त्रसिद्धं तेनैव दत्तकस्थलेऽपि त्रिभिरेव सपिण्डीकरणसिद्धौ प्रकृतवचनं किमर्थ-मिति चेदाह—तस्मादेषेति । दत्तकानामेषा पिण्डान्वयरूपाऽशौचाविवाह्यत्वादिप्रयोजिका त्रिपुरुष्येव सपिण्डता ज्ञेया । ननु—लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् । इति मत्स्यपुराणोक्तं साप्तपौरुषं सापिण्ड्यम् । मात्स्याभिहितस्य सप्तपुरुषावधिकसापिण्ड्यस्यौरसानौरसोभयविष-यतया सामान्यरूपस्य, 'दत्तकादयः' इत्युक्तत्वादनौरसमात्रविषयतया विशेषरूपेण त्रिपुरुषसापिण्ड्येनापवादेन बाधितत्वादेवेति भावः ।

**अत एवेति** । मात्स्याभिहितसाप्तपौरुषसापिण्ड्यस्य 'तस्मादेषा त्रिपौरुषी' इति कार्ष्णाजिन्युक्तेन त्रिपुरुषसापिण्ड्येनापवादत्वेन बाधितत्वादेवेत्यर्थः । **लेपिन-स्त्रीन् वेति** । 'एकपिण्डे वा द्वावनुकीर्तयेद् द्वितीये पुत्रस्तृतीये पौत्रः' इति त्रिपु-रुषसापिण्ड्यमभिधाय प्रपितामहात्परांस्त्रीन् लेपभागिनः पुरुषान् कीर्तयन् सप्तमपुरुषपर्यन्तं लेपभागिपुरुषत्रयं पिण्डभागिपुरुषत्रयं च कीर्तयेदिति साप्तपौरुषं सापिण्ड्यं पक्षान्त-रमित्येकीयमतेनोपन्यस्तवान् हारीतस्तत्संगतं भवति । यदि च साप्तपौरुषं सापिण्ड्यं सकलशिष्टमतसिद्धं स्यात्तर्ह्येकीयपक्षत्वेन तदुपन्यासोऽयुक्तः स्यादित्यर्थः । त्रिपु-रुषसापिण्ड्येन साप्तपुरुषसापिण्ड्यस्य बाधितत्वादेव तदेकीयपक्षान्तरमित्याकलय्यैवान्यत्र त्रिपुरुषसापिण्ड्यस्यैव संग्रहः कृत इत्याह—**दत्तकानां त्विति** । दत्तकपुत्राणां

जनकस्य कुले तद्गृहीतुरिति धारणा ॥ इति ।

यदिदमुभयत्र त्रिपुरुषसापिण्ड्याभिधानं तद्व्यामुष्यायणाभिप्रायेण । तस्य त्रिकद्वयेन सपिण्डनाभिधानात् । शुद्धदत्तकस्य तु—

गोत्ररिक्थे जनयितुर्न हरेद्त्त्रिमः सुतः ।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥

इति प्रागुक्तमनुवचने पिण्डनिवृत्तिदर्शनात्प्रतिग्रहीतृकुल एव सापिण्ड्यमिति ।

यत्तु वृद्धगौतमीयम्—

सगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः ।
विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते ॥

सगोत्रेषु मध्ये कृता अपि दत्तकादयो विधिनैव गोत्रं भजन्ते । परंतु तेषु सापिण्ड्यं नोत्पद्यते । सगोत्रेष्वपि सापिण्ड्यानुपपत्तौ परगोत्रेषु सुतरां सापिण्ड्यानुपपत्तिरिति । तत्तु पुत्रान्तरवत्साप्तपौरुषसापिण्ड्यप्रसक्तौ निषेधकं

---

जनककुले पालककुले च त्रिपुरुषमेव सापिण्ड्यमिति तदर्थः । दत्तकपुत्राणां यदुभयकुले त्रिपुरुषं सापिण्ड्यमभिहितं तद्व्यामुष्यायणदत्तकमनुलक्ष्योक्तमिति बोध्यम् । द्व्यामुष्यायणकर्मकसपिण्डनस्य प्रतिग्रहीतृपित्रादित्रयेण जनकपित्रादित्रयेण चोक्तत्वादिति भावः ।

शुद्धदत्तकस्य तु जनककुले सापिण्ड्यं सर्वथा नास्ति । गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः । गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा । इति मनुना दत्तकस्य जनकपित्रे पिण्डदानस्य निषिद्धत्वात् । किंतु प्रतिग्रहीतृकुल एव तत्सापिण्ड्यम् । तच्च पिण्डान्वयरूपं त्रिपुरुषमेवेति ज्ञेयम् ।

ननु दत्तकस्य प्रतिग्रहीतृकुले सापिण्ड्याभिधानं वृद्धगौतमवचनविरोधादयुक्तमित्याशङ्क्य तद्व्यवस्थापयितुमाह—यत्त्विति । सगोत्रेष्विति । ये दत्तक्रीतादयः सुताः सगोत्रेषु समानगोत्रमध्ये कृतास्ते विधिना परिग्रहविधिना गोत्रतां संततित्वं यान्ति प्राप्नुवन्ति, किंतु तैः सह विधिना सापिण्ड्यं नोत्पद्यत इति तदर्थः । अत्र सगोत्रेष्वपि सापिण्ड्यानुत्पत्तिप्रतिपादने सति भिन्नगोत्रेषु सुतरां सापिण्ड्यानुत्पत्तिरुक्ता भवतीति दत्तकस्य प्रतिग्रहीतृकुले सापिण्ड्याभिधानमयुक्तमिति शङ्काशयः । उत्तरयति— तत्त्विति । वृद्धगौतमीयं तद्वचनं दत्तकैः सह सापिण्ड्यं नोत्पद्यत इत्येवं सर्वथा सापिण्ड्यनिषेधकमिति न मन्तव्यम् । किंतु यथौरसपुत्र उत्पन्ने तेन सह साप्तपौरुषं सापिण्ड्यमुत्पद्यते तथा दत्तके जाते सति तेन सह साप्तपौरुषं सापिण्ड्यं नोत्पद्यत इत्येवं साप्तपौरुषसापिण्ड्यनिषेधकमित्यवश्यं

साषिण्ड्यमयुक्तदशाहाशौचादिप्रतिषेधकं न तु सामान्यतः सापिण्ड्यनिषेधकम् । उक्तवचनजातात् ॥

---

स्वीकार्यम् । अन्यथा त्रिपुरुषसापिण्ड्याभिधायकवचनानां विरोधो दुर्निवारः स्यात् । अथवा 'दशाहं शावमाशौचं सपिण्डेषु विधीयते' इति दशाहाशौचप्रयोजकं सापिण्ड्यं यथा पुत्रान्तरेषु भवति तद्वद्दत्तकेषु दशाहाशौचप्रयोजकं सापिण्ड्यं न भवतीत्यर्थकं कल्प्यं न तु सामान्यतः सापिण्ड्यं नास्तीत्यर्थकम् । त्रिपुरुषसापिण्ड्याभिधायकवचनविरोधादेवेत्यर्थः ।

तदयं निर्गलितोऽर्थः—दत्तकचन्द्रिकाकारमते शुद्धदत्तकस्य जनककुले परस्परं सापिण्ड्यं नास्ति । गोत्ररिक्थे० इति मनुना शुद्धदत्तकस्य जनकपितृपिण्डदाननिवृत्तेरभिधानात् । न च शुद्धदत्तकस्य जनककुले पिण्डान्वयरूपसापिण्ड्यस्य निषिद्धत्वेऽप्यवयवान्वयरूपं सापिण्ड्यं स्यादेव, आवश्यकं तस्य दुरपनेयत्वादिति वाच्यम् । अवयवान्वयसापिण्ड्यस्य श्रुतीनां वैराग्यार्थत्वाच्चासां सापिण्ड्यनिमित्तत्वे प्रमाणाभावेन श्रुतिसिद्धत्वाभावाद्दत्तकादिषु प्रत्यक्षं बाधितत्वाच्च तदनादरेण पिण्डान्वयसापिण्ड्यस्यैवैतद्ग्रन्थकारमते समादरणात् । अत एव 'शुद्धदत्तकस्य तु गोत्ररिक्थे० इति पिण्डनिवृत्तिदर्शनात्प्रतिग्रहीतृकुल एव सापिण्ड्यम्' इति ग्रन्थेन सापिण्ड्याधिकरणकुलावधारणेन जनककुले सापिण्ड्यनिवृत्तिः सूचिता संगच्छते । यच्चोक्तं 'अथास्य सापिण्ड्यमित्युपक्रम्य जनककुलेऽवयवान्वयेन" इति । तद्द्व्यामुष्यायणाभिप्रायेण । ये त्ववयवान्वयेन सापिण्ड्यमुररी कुर्वन्ति तेषां मतेऽपि द्व्यामुष्यायणस्य जनककुलेऽवयवान्वयेन न साप्तपौरुषं सापिण्ड्यं किंतु त्रिपुरुषमेवेत्यभिप्रायकमित्यर्थः । विज्ञानेश्वरवाचस्पतिशूलपाण्यादयो ह्यवयवान्वयरूपस्यैव सापिण्ड्यस्य पुरस्कर्तारः । एवमेतेन तु द्व्यामुष्यायणस्य जनकुलेऽवयवान्वयेन सापिण्ड्यं नैव प्राप्नोति । स्वमतेऽवयवान्वयसापिण्ड्यानङ्गीकारात् । किंतु लेपभाज इति मात्स्योक्तं पिण्डान्वयरूपं साप्तपौरुषं सापिण्ड्यं तत्र प्राप्नोति तदपि त्रिपुरुषमेव । कार्ष्णाजिनिवचनादित्याशय इति बोध्यम् ।

अत एव हेमाद्रिरवयवान्वयसापिण्ड्यस्य दत्तके प्रत्यक्षबाधितत्वेन पिण्डान्वयमेवोपादाय दत्तकादीनां प्रतिग्रहीतृकुले त्रिपुरुषमेव सापिण्ड्यं व्यवस्थापितवान् । स्मृतिचन्द्रिकाचारार्कमेधातिथिमाधवादयः पिण्डान्वयरूपमेव सापिण्ड्यं पुरस्कुर्वन्ति । किंतु प्रतिग्रहीतृकुल एव तत् । तच्च त्रिपुरुषमेव । यावन्तः पितृवर्गाः स्युरित्यनेन शुद्धदत्तकस्य प्रतिग्रहीतृपित्रादित्रयेण सपिण्डनाभिधानात् । द्व्यामुष्यायणस्य तूभयकुलेऽपि सापिण्ड्यं तदपि त्रिपुरुषमेव । द्व्यामुष्यायणस्य प्रतिग्रहीतृपित्रादित्रयेण जनकपित्रादित्रयेण च यावन्त इति वचनेन सपिण्डनाभिधानादिति ।

## अथ चतुर्थं प्रकरणम् ।

अथ दत्तकाशौचनिर्णयः । तत्र शुद्धदत्तकस्य जनककुले परस्परमशौचं नास्त्येव । गोत्रपिण्डनिवृत्त्याऽशौचनिवृत्तेरर्थसिद्धत्वात् । द्व्यामुष्यायणस्य तूभयत्रैवाशौचमिति । ब्रह्मपुराणे—

दत्तकमीमांसाकारमते तु शुद्धदत्तकस्य जनककुले पिण्डान्वयरूपं सापिण्ड्यं नास्ति । गोत्ररिक्थे इति मनुना शुद्धदत्तकस्य जनकपिण्डदाननिवृत्तेरभिधानात् । किंत्ववयवान्वयरूपमेव तत् । यावच्छरीरं तस्य दुरपनेयत्वात् । तच्च पितृतः साप्तपौरुषं मातृतश्च पाञ्चपौरुषम् । दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता । पञ्चमी सप्तमी तद्वद्गोत्रं तत्पालकस्य च । इति बृहन्मनुवचनात् । प्रतिग्रहीतृकुले तु नावयवान्वयरूपं सापिण्ड्यं संभवति । प्रतिग्रहीतृमातापितृशरीरावयवान्वयस्य दत्तकपुत्रेऽत्यन्तासंभवात् । किंतु पिण्डान्वयरूपमेव । तच्च त्रिपुरुषमेव । यावन्तः पितृवर्गाः स्युरिति कार्ष्णाजिनिवचनात् । द्व्यामुष्यायणस्य तूभयकुलेऽपि पिण्डान्वयरूपं सापिण्ड्यम् । तच्च त्रिपुरुषमेव । यावन्त इति पूर्वोक्तकार्ष्णाजिनिवचनादेव । यद्यपि निरुक्तदत्तकस्य 'बीजवप्तुः सपिण्डता' इति बृहन्मानववचनात् 'लेपभाजश्चतुर्थाद्या इति मात्स्यवचनाच्च जनककुले साप्तपुरुषं सापिण्ड्यं प्राप्नोति तथाऽपि निरुक्तस्थले वचनद्वयप्राप्ताया अपि साप्तपुरुषसपिण्डतायाः कार्ष्णाजिन्युक्तेन त्रिपुरुषसापिण्ड्येनापवादत्वेन बाधः । बृहन्मनूक्तसपिण्डतायाः शुद्धदत्तकस्थले चरितार्थत्वात् । मात्स्योक्तसपिण्डतायाश्चौरसस्थले चारितार्थ्यादिति ॥

## ( अथ चतुर्थं प्रकरणम् ) ।

अधुना दत्तकाशौचं निर्णीयते । तत्र शुद्धदत्तकस्य जनककुले परस्परं नास्ति । शुद्धदत्तकनिरूपितं जनककुले जनककुलनिरूपितं शुद्धदत्तके चेति परस्परं नास्तीत्यर्थः । तत्र हेतुमाह—**गोत्रपिण्डेति** । अयं भावः—गोत्ररिक्थे० ( म० स्मृ० ९ । १४२ ) इति मनुवचने पिण्डस्वधाशब्दाभ्यामाशौचादिकं सकलं पितृकर्मोपलक्ष्यते । ततश्च पिण्डदानादिहेतुभूतयोर्गोत्ररिक्थयोर्निवृत्त्याभिधानात्प्रेतपिण्डदानादेश्च 'यावदाशौचं तावत्प्रेतोदकं पिण्डमेकं च दद्युः' इति सूत्रादाशौचपूर्वकत्वनियमावगमात्प्रेतपिण्डादिदानाशौचयोः परस्परं यत्र यत्र प्रेतपिण्डादिदानं तत्र तत्राऽऽशौचित्वं यत्र यत्र चाऽऽशौचित्वं तत्र तत्र प्रेतपिण्डादिदानम् । ( अत्रत्यादिपदेन नीरक्षीरदानप्रेततर्पणादीनां ग्रहणम् ) । इत्येवं समव्याप्तत्वसिद्धेः, समव्याप्तयोश्च मध्येऽन्यतरस्य निवृत्तौ सत्याम् 'संनियोगशिष्टानामन्यतरापाय उभयोरप्यपायः' इति न्यायेनान्यतरस्य निवृत्तेः सिद्धत्वात्प्रेतपिण्डादिदानाशौचयोः समव्याप्तयोर्मध्ये

गोत्ररिक्थे जनयितुरित्यनेन पिण्डनिवृत्त्यभिधानेनाऽऽशौचनिवृत्तिरर्थात्सिध्यतीति। विस्त-रस्तु दत्तकमीमांसायां मत्कृतायां तट्टीकायां मञ्जर्यां च द्रष्टव्यः। तस्माद्दत्तद्द-त्तकस्य जनककुले मिथ आशौचं नास्त्येवेति सिद्धम्। मयूखकारा अपि दत्तकस्य मरणे जनकादेर्जनकादिमरणे दत्तकस्य नाऽऽशौचम्। प्रापकाभावात्। तथा हि—'गोत्ररिक्थे०' ( म० स्मृ० ९। १४२ ) इति मानवे गोत्ररिक्थस्वधापदैर्जन-कादीनां परस्परसंबन्धप्रयुक्तं कार्यं लक्ष्यते। 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इत्यत्र वसन्ते ब्राह्मणोऽग्नीनादधीतेति वाक्यान्तरप्राप्तस्याऽऽधानस्य कर्तारमुद्दिश्य जातपुत्रत्वकृष्णकेशत्वरूपधर्मद्वयविधाने वाक्यभेददोषभिया तादृशपदद्वयेन लक्षणया युवत्वरूपोऽवस्थाविशेषो लक्ष्यते। तत्र जातपुत्रपदं शैशवावस्थानिवर्तकम्। कृष्ण-केशपदं च वृद्धत्वावस्थानिवर्तकम्। ततश्च यथाऽत्र पदद्वयेन युवत्वरूपो धर्मो गृह्यते तद्वदिति भावः। तेन च लक्षितकार्यमात्रनिवृत्त्याऽऽशौचस्यापि निवृत्ति-सिद्धेः। अन्यथा यावद्वचनं प्रमाणमिति न्यायेन वाचनिक्यां गोत्ररिक्थपिण्डाना-मेव निवृत्तावङ्गीक्रियमाणायां दत्तकसोदरादीनां परस्परं संबन्धस्यानिवृत्त्या श्राद्धाशौ-चरिक्थग्रहणादौ परस्परमधिकारापत्तेरित्याहुः। प्रतिग्रहीतृकुले तु मिथस्तदाशौचम-स्त्येव। तच्च दत्तकादिमरणे प्रतिग्रहीतृपित्रादीनां त्रयाणां त्रिदिनमाशौचम्। अन्याश्रितेषु दारेषु परपत्नीसुतेषु च। मृतेष्वाप्लुत्य शुध्यन्ति त्रिरात्रेण द्विजो-त्तमाः। इति बृहस्पतिवचनात्। स्वदारेषु प्रतिलोमव्यतिरिक्तमन्यं पतिमाश्रितेषु। पुनर्भूष्विति यावत्। तथा परपत्नीसुतेषु क्षेत्रजदत्तकक्रीतकृत्रिमादिपुत्रेष्वित्यर्थः। एतेषु मृतेषु त्रिरात्रेण स्नात्वा शुद्धा भवन्तीति तदर्थः। अत्र प्राधान्याद्द्विजोत्तमग्रहणं न तु द्विजा एव शुध्यन्ति नान्ये इत्यभिप्रायेण। तेन दत्तकमरणे द्विजवच्छूद्रा अपि त्रिरात्रेण स्नात्वा शुध्यन्तीति बोध्यम्। त्रिपुरुषानन्तर्वर्तिनां प्रतिग्रहीतुः प्रपितामहादीनां त्रयाणामर्थाद्दत्तकसकुल्यानां त्वेकाहमाशौचम्। सूतके मृतके चैव त्रिरात्रं परपूर्वयोः। एकाहस्तु सपिण्डानां त्रिरात्रं यत्र वै पितुः। इति मरी-चिवचनात्। परोऽन्यः पूर्वः पतिर्यस्याः सा परपूर्वा। तथा परोऽन्यः पूर्वः पिता यस्य स परपूर्वः। परपूर्वा च परपूर्वश्च परपूर्वौ तयोः। पुनर्भूदत्तकयोरिति यावत्। पुनर्भूदत्तकयोर्यथायथं जनने मरणे च प्रत्यासत्त्या तत्परिग्राहित्रयस्य त्रिरात्रम्। पुनर्भ्वा मरणे तत्परिग्राहिभर्त्रादित्रयस्य भर्तृतत्पितृपितामहानाम्, दत्तक-मरणे तत्परिग्रहीतृतत्पितृपितामहानां त्रिदिनमाशौचमिति भावः। सपिण्डानां त्रिपु-रुषानन्तर्वर्तिनां भर्तुः प्रपितामहादीनां त्रयाणां प्रतिग्रहीतुः प्रपितामहादीनां त्रयाणां चैकाहः। दत्तकस्य साक्षात्सपिण्डेषु त्रिपुरुषेषु त्रिरात्रविधिना बाधात्तदनन्तर्व-

त्रिनः प्रतिग्रहीतुः प्रपितामहादयस्त्रयः सपिण्डा अत्र सपिण्डपदेन गृह्यन्त इति भावः । अत्र पितुरिति भर्तुरप्युपलक्षणम् । परपूर्वासु भार्यासु पुत्रेषु कृतकेषु च । भर्तृपित्रोस्त्रिरात्रं स्यादेकाहस्तु सपिण्डतः । इति हारीतवाक्ये भर्तृग्रहणात् । ततश्च यत्र—यदा भर्तृपित्रोस्त्रिरात्रं तत्र—तदा सपिण्डानामेकाहमाशौचमुचितमिति तदर्थः । तुल्यन्यायात्प्रतिग्रहीतृपित्रादित्रिपुरुषसपिण्डमरणे त्रिपुरुषानन्तरवर्तिनां प्रतिग्रहीतुः प्रपितामहादीनां त्रयाणामर्थाद्दत्तकसकुल्यानां मरणे च दत्तकस्यानुक्रमेण त्रिरात्रमेकाहं चाऽऽशौचं ज्ञेयमिति केचिदाहुः । अन्ये तु यदिदमन्याश्रितेष्विति बृहस्पतिवचनेन त्रिरात्रमाशौचं विधीयते तद् यन्निरूपितं भार्यात्वं पुत्रत्वं च तस्यैव, भार्यापुत्रशब्दयोः संबन्धिशब्दत्वात् । नतु भर्त्रादित्रयस्य प्रतिग्रहीतृपित्रादित्रयस्य वा । एवकारेण भर्तुः प्रतिग्रहीतुश्च पितृपितामहयोर्व्यावृत्तिः । एतेनेदमुक्तं भवति—अन्याश्रितदारमरणे स्वमन्यं पतिमाश्रिता दारास्तस्यैकस्यैव परपतेस्त्रिरात्रं नतु तत्पितृपितामहयोः । तथा परपत्नीसुतेष्वर्थाद्दत्तकक्रीतादिपुत्रेषु मृतेषु तत्प्रतिग्रहीतुरेकस्यैवेदं त्रिरात्रं नतु तत्पितृपितामहयोरपीति । तथा च दत्तकमरणे तत्प्रतिग्रहीतुस्त्रिरात्रम् । त्रिपुरुषान्तर्वर्तिनां सपिण्डानामेकाह इति वदन्ति । प्रतिग्रहीतृपित्रादित्रयाणां त्रिदिनमाशौचं मन्यमानानां केचिच्छब्दवाच्यानां त्वयमाशयः—यन्निर्वाप्यपिण्डान्वयेनैव सापिण्ड्यं नावयवान्वयेन । निर्वाप्यसापिण्ड्यं च शुद्धदत्तकस्य जनककुले नास्त्येव । प्रतिग्रहीतृकुले त्वस्ति । तच्च त्रिपुरुषम् । द्व्यामुष्यायणस्य तु जनककुले पालककुले चेत्युभयत्रापि तदस्ति । तदपि त्रिपुरुषमेव । ततश्च 'दशाहं शावमाशौचं सपिण्डेषु विधीयते' ( म० स्मृ० ५ । ५९ ) इति दशाहमाशौचं प्राप्नोति । तदपवादत्वेनेदं त्रिरात्रं विधीयत इति 'उत्सर्गसमानदेशा अपवादाः' इति न्यायेन त्रिपुरुषसपिण्डानामेवेदं त्रिरात्रं भवितुं युज्यते नत्वेकस्यैव प्रतिग्रहीतुरुत्तरपतेर्वेति । एवं च 'यन्निरूपितं पुत्रत्वं तस्यैव' इत्यत्रत्यैवकारेण न प्रतिग्रहीतुः पितृपितामहयोर्व्यावृत्तिः, किंतु जनकपित्रादीनामेव । एतेनेदमुक्तं भवति—यद्दत्तकमरणे प्रतिग्रहीतुस्त्रिदिनाशौचं, न जनकपितुरिति । जनकपित्रादावस्य त्रिरात्रस्याप्रवृत्तौ तात्पर्यं नतु प्रतिग्रहीतुः पितृपितामहयोः । उत्सर्गसमानदेशा अपवादा इति युक्तिविरुद्धत्वादिति तत्त्वम् । तथा च प्रतिग्रहीतृपित्रादीनां त्रयाणां त्रिरात्रं त्रिपुरुषानन्तरवर्तिनां प्रतिग्रहीतुः प्रपितामहादीनां त्रयाणां दत्तकसकुल्यानां त्वेकाह इति । अत्र युक्तायुक्तं सद्भिर्विचार्यम् । दत्तकमरणे सोदकसगोत्राणां तु स्नानमात्रम् । अन्याश्रितेषु दारेषु परपत्नीसुतेषु च । गोत्रिणः स्नातशुद्धाः स्युस्त्रिरात्रेणैव तत्पिता । इति प्रजापतिवचनात् । दत्तकसपिण्डेषु त्रिषु दत्तकसकुल्येषु त्रिषु च क्रमेण त्रिरा-

दत्तकश्च स्वयंदत्तः कृत्रिमः क्रीत एव च ।
अपविद्धाश्च ये पुत्रा भरणीयाः सदैव ते ॥
भिन्नगोत्राः पृथक्पिण्डाः पृथग्वंशकराः स्मृताः ।
जनने मरणे चैव त्र्यहाशौचस्य भागिनः ॥

---

त्रैकाहविधिप्रवृत्तेरत्र गोत्रिपदेन सोदकसगोत्रा एवावशिष्यन्ते। दत्तकस्य पुत्रपौत्राणां जनने मरणे वा प्रतिग्रहीतृपित्रादीनां त्रयाणां त्रिरात्रमाशौचम्। सूतके मृतके चैव त्रिरात्रं परपूर्वयोः' इति पूर्वोक्तमरीचिवाक्यात्। यद्यपि परपूर्वयोः—पुनर्भूदत्तकयोरुत्पन्नयोरेव स्वीकारात्तत्परिग्राहिणोस्तदुत्पत्त्याशौचं न घटते तथाऽपि तदपत्योत्पत्त्याशौचं घटत एवेति मरीचिवाक्ये सूतकनिर्देशः। ततश्च निरुक्तमरीचिवाक्यस्य 'दत्तकस्य पुत्रपौत्राणां जनने मरणे वा' इत्यादिनिरुक्तार्थः संपद्यते। 'जनने मरणे चैव त्र्यहाशौचस्य भागिनः' इति ब्रह्मपुराणाच्च। त्रिपुरुषानन्तरवर्तिनां पितृसपिण्डानां प्रतिग्रहीतुः प्रपितामहादीनां दशमपुरुषावधिकानां सकुल्यानां त्वेकाहः। एकाहस्तु सपिण्डानामिति पूर्वोक्तमरीचिवाक्यात्। सोदकसगोत्राणां तु स्नानमात्रम्। गोत्रिणः स्नानशुद्धाः स्युरिति पूर्वोक्तप्रजापतिवाक्यात्। दत्तकस्य पुत्रपौत्राणां मरणे येषां यावदाशौचं विहितं तेषां तेषां मरणेऽपि दत्तकपुत्रपौत्राणां तदेवाऽऽशौचं तुल्यन्यायादिति भाति। इति शुद्धदत्तकस्य तत्पुत्रपौत्राणां च जनने मरणे वा प्रतिग्रहीतृकुले मिथ आशौचप्रकारः।

एवमेव व्यामुष्यायणस्य तत्पुत्रपौत्राणां च जनने मरणे च मिथ आशौचं ज्ञेयम्। परंतु तत्रायं विशेषः—व्यामुष्यायणस्य जनककुले पालककुले चेत्युभयत्र त्रिपुरुषसापिण्ड्यसत्त्वाज्जनकपित्रादित्रयाणां पालकपित्रादित्रयाणां च त्र्यहाशौचमित्याह—दत्तकश्चेत्यादि। ब्रह्मपुराणस्थमिदं वचनम्। दत्तकः, स्वयंदत्तः, कृत्रिमः, क्रीतः, अपविद्धश्चैते पुत्राः सर्वदैव भरणीया अन्नवस्त्रादिना पोषणीया भवन्ति। त एते सर्वे प्रतिग्रहीत्राद्यपेक्षया भिन्नगोत्राः, पृथक्पिण्डा नाम प्रतिग्रहीत्रादेरसपिण्डाः। तथा पृथग्वंशकराः—जनकापेक्षया पृथग् भिन्नो यः प्रतिग्रहीत्रादिस्तद्वंशप्रवर्तकाः सन्तो जननमरणनिमित्तकत्र्यहाशौचस्य भाजनाः स्मृताः स्मृतिकारैरुक्ता इति तदर्थः। तदेतत्त्रिदिनाशौचं यन्निरूपितं व्यामुष्यायणत्वं तदुभयकुले त्रिपुरुषसपिण्डानां भवति। यद्यपि दत्तककृत्रिमादीनामुत्पन्नानामेव स्वीकारात्प्रतिग्रहीत्रादीनां जननाशौचं न संभवति तथाऽपि व्यामुष्यायणस्य पुत्रपौत्राणामुत्पत्त्या जननाशौचं संभवत्येवेत्यत्र वाक्ये जननिर्देशः। तथा चायमर्थः संपन्नः—व्यामुष्यायणस्य तत्पुत्रपौत्राणां वा यथायथं जनने मरणे वोभयकुले त्रिपुरुषसपिण्डानां त्र्यहाशौचमु-

पराशरः—भिन्नगोत्रः सगोत्रो वा नीतः संस्कृत्य चेच्छया ।
जनने मरणे तस्य त्र्यहाशौचं विधीयते ॥
तथा—औरसं वर्जयित्वा च सर्ववर्णेषु सर्वदा ।
क्षेत्रजादिषु पुत्रेषु जातेषु च मृतेषु च ॥
अशौचं तु त्रिरात्रं स्यात्समानामिति निश्चयः ।

कमिति । एतत्त्र्यहाशौचं सगोत्रसापिण्डानन्यदत्तकस्य जनने मरणे च बोध्यम् । ब्रह्मपुराणे भिन्नगोत्राः पृथक्पिण्डा इति विशेषणेनासगोत्रसपिण्डदत्तकप्रतीतेः । सगोत्रसपिण्डे दत्तकीकृते त्वाकाङ्क्षानुत्थानाद्यथावस्थितसाप्तपुरुषसापिण्ड्यहेतुकदशाहाशौचबाधे प्रमाणाभावात् । पराशरोऽप्याह—भिन्नगोत्र इति । भिन्नगोत्रोऽथवा सगोत्रो यः संस्कृत्य स्वेच्छया क्रीतकृत्रिमादिपुत्रतां नीतस्तस्य मरणे जनने वा पूर्वापरत्रिपुरुषसपिण्डानां त्र्यहाशौचं विधीयत इति तदर्थः । औरसं वर्जयित्वेति । सर्ववर्णेषु ब्राह्मणादिशूद्रान्तेषु चतुर्षु वर्णेष्वौरसपुत्रं परित्यज्य क्षेत्रजादिष्वेकादशसु पुत्रेषु जातेषूत्पन्नेष्वथवा मृतेषु सत्सु त्रिरात्रमाशौचं भवति । सदेति । सोऽयं दत्तक उपनयनान्तरं वा म्रियतां प्राग्वा, त्रिरात्रमाशौचं भवति । उभयकुले त्रिपुरुषसपिण्डानामिति शेषः । तदेवं ब्रह्मपुराणपराशरादिवचनपर्यालोचनया द्व्यामुष्यायणस्य तत्पुत्रपौत्राणां वा यथायथं जननमरणयोरुभयकुले त्रिपुरुसापिण्डानां त्र्यहाशौचमिति लभ्यते ।

तुल्यन्यायादुभयकुलीयत्रिपुरुषसापिण्डमरणे द्व्यामुष्यायणस्य तत्पुत्रपौत्राणां च त्र्यहाशौचम् । त्रिपुरुषानन्तरवर्तिनां पितृसपिण्डानां त्वेकाहमाशौचम् । एकाहस्तु सपिण्डानामिति पूर्वोक्तमरीचिवाक्यात् । सोदकसगोत्राणां तु स्नानमात्रम् । गोत्रिणः स्नानशुद्धाः स्युरिति प्रजापतिवाक्यात् । एकाहं स्नानमात्रं चैतद्द्वयं त्रिरात्रवदुभयकुलेऽपीति भाति । तुल्यन्यायात्त्रिपुरुषानन्तरवर्तिपितृसापिण्डानां सोदकसगोत्राणां च मरणे द्व्यामुष्यायणस्य तत्पुत्रपौत्राणां चैकाहः स्नानमात्रमिति बोध्यम् । धर्मसिन्धौ तु दत्तकस्य मरणे पूर्वापरपित्रोस्त्रिरात्रं सपिण्डानामेकाहमाशौचम् । दत्तकेनापि पूर्वापरपित्रोर्मृतौ त्रिरात्रम् । पूर्वापरसपिण्डानां मरणे एकाहः । दत्तकस्य पुत्रपौत्रादेर्जनने मरणे वा पूर्वापरसपिण्डानामेकाहः । एवं पूर्वापरसपिण्डमरणादावपि दत्तकस्य पुत्रपौत्रादेरेकाहः । इदं सपिण्डसमानोदकभिन्ने दत्तीकृते ज्ञेयम् । सगोत्रसपिण्डे सोदके च दत्तीकृते यथाक्रमं दशाहं त्रिरात्रं च यथाप्राप्तं भवत्येवेत्युक्तम् ।

अत्रेदं बोध्यम्—इदानीं क्वापि लोके केवलदत्तकस्य प्रायेणादर्शनात्तदशौचविचारस्यानुपयुक्तत्वात्तं परित्यज्य द्व्यामुष्यायणदत्तकाशौचविचारः सिन्धुकारेण

सर्वदा—उपनयनानन्तरमपि । अत्र सगोत्रस्यापि विधिना जनकगोत्रनिवृत्ति-
त्तिपूर्वकग्रहीतृगोत्रप्राप्त्यावसगोत्रदत्तकाविशेषात् त्र्यहाशौचमुक्तं युक्तमेव । तथा

काशीनाथोपाध्यायेनाऽऽहृतः । द्विविधद्व्यामुष्यायणेऽपीदानीं नित्यद्व्यामुष्यायणो नोपलभ्यत इत्यन्यत् । तत्र सूतके मृतके चैव त्रिरात्रं परपूर्वयोः । एकाहस्तु सपिण्डानां त्रिरात्रं यत्र वै पितुः । परपूर्वयोः पित्रोर्जनकपालकयोरित्यर्थः । इति मरीचिवचनमेतत्स-मानार्थकान्यन्यानि वा वचनानि 'दत्तकस्य मरणे' इत्यारभ्य 'सपिण्डानामे-काहमाशौचम्' इत्यन्तग्रन्थे प्रमाणभूतानि भवेयुः । मरीचिवचनस्थं परपूर्वयोरिति पदं पुनर्भूदत्तकपरत्वेन व्याख्यातं दत्तकमीमांसाकारादिभिः । सिन्धुकारादिभिस्तु जन-कपालकपितृपरत्वेनेति विशेषः । 'दत्तकेनापि पूर्वापरपित्रोर्मृतौ त्रिरात्रम्' इत्यत्र 'दत्तकश्च स्वयंदत्तः०' इत्युपक्रम्य 'सूतके मृतके चैव त्र्यहाशौचस्य भागिनः' । इति ब्राह्मवचनं प्रमाणम् । 'पूर्वापरसपिण्डानां मृतौ दत्तकस्यैकाहः' इत्यर्थे दत्तकमरणे यस्य यावदाशौचमुक्तं तन्मरणे दत्तकस्य तावदाशौचमिति तुल्यन्यायः प्रमाणम् । 'दत्तकस्य पुत्रपौत्रादेर्जनने मरणे वा सपिण्डानामेकाहः' इत्यर्थे 'एकाहस्तु सपिण्डानाम्' 'एकाहस्तु सपिण्डतः' इत्यादिमरीचिहारीतवचनं प्रमाणम् । तुल्यन्यायात्सापिण्डमरणादौ दत्तकस्य पुत्रपौत्रादेरेकाह इति ज्ञेयमिति ।

ननु शुद्धदत्तकस्य जनककुल आशौचं नास्तीत्युक्त्या प्रतिग्रहीतृकुले तद-स्तीति प्रतीयते । ततश्च निरुक्तब्रह्मपुराणादिवाक्यैर्यच्छुद्धदत्तकमरणे त्रिरात्राशौचमुक्तं तद्भिन्नगोत्रस्य दत्तकत्वे गोत्ररिक्थे जनयितुरिति मनुवचनेन जनकगोत्रनिवृत्तिपूर्वक-प्रतिग्रहीतृगोत्रप्राप्त्या युज्यते । आगन्तुकगोत्रान्तरनिमित्तेन विधानात् । यद्यपि 'दशाहं शावमाशौचं सपिण्डेषु विधीयते' इत्याद्याशौचविधायकवाक्यपर्यालोचनेन सापिण्ड्यस्याऽऽशौचहेतुत्वं लभ्यते तथाऽपि गोत्रसहितस्यैव सापिण्ड्यस्याऽऽशौचहे-तुत्वाङ्गीकारावश्यकतया गोत्रान्तरस्याप्याशौचनिमित्तत्वमुक्तमिति भावः । किंतु यदा सगोत्र एव शुद्धदत्तकः कृतस्तदा गोत्रान्तरप्राप्तिर्नैव संभवति, येन गोत्रान्तरप्राप्ति-निमित्तकोऽपि विधिः प्रवर्तेत । जनकपालकयोर्गोत्रस्यैक्यात् । यद्यपि परिग्रहविधि-बलात्प्रतिग्रहीतृगोत्रसंबन्धो जायते तथाऽप्यवर्जनीयत्वाज्जनकगोत्रसंबन्धनिवृत्तिर्न घटते । नापि गोत्रान्तरसंबन्धो घटते । योऽयं जनकगोत्रसंबन्धः स एव प्रतिग्रहीतृगोत्र-संबन्ध इति । ततश्च दत्तकसोदरादिमरणे यथा तत्सपिण्डानां दशाहमाशौचं तद्व-द्दत्तकमरणेऽपि प्रतिग्रहीतृप्रभृतितत्सापिण्डानां दशाहाशौचमेव युक्तम् । अत एव धर्मसिन्धौ 'इदं' ( त्रिरात्रमेकाहं चाऽऽशौचं ) सपिण्डसोदकभिन्ने दत्तीकृते ज्ञेय-मित्युक्तं संगच्छत इत्याशङ्कयाऽऽह—अत्र सगोत्रस्यापीति । अयं भावः—

स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनरूपदानविधिबलाद्दत्त्रिमस्य जनकसंबन्धनिवृत्त्या तत्प्रयुक्तकार्यस्यापि रिक्थपिण्डाशौचाद्यधिकारस्य सर्वस्य निवृत्तिर्भवति । तथा पुत्रत्वापादकदत्तकपरिग्रहविधिबलात्प्रतिग्रहीतृपितृसंबन्धो जायते । तत्संबन्धप्रयुक्तं कार्यं च प्रवर्तत इति वस्तुस्थितिः । ततश्च जनकगोत्रसंबन्धनिवृत्त्या दशाहाशौचनिवृत्तिः प्रतिग्रहीतृगोत्रसंबन्धप्रवृत्त्या त्र्यहाशौचप्रवृत्तिश्च जायते । दानविधिना जनकगोत्रसंबन्धस्य निवृत्तत्वात्प्रतिग्रहविधिबलाज्जायमानः प्रतिग्रहीतृगोत्रसंबन्धः प्रतिग्रहीतृगोत्रस्य जनकगोत्रत्वेऽपि न जनकगोत्रत्वेन रूपेण जायते, किंतु प्रतिग्रहीतृगोत्रत्वेन रूपेण भवति । प्रतिग्रहीतुर्गोत्रे यज्जनकगोत्रत्वमासीत्तद्दानविधिबलान्निवृत्तमिति प्रतिग्रहीतृगोत्रस्य जनकगोत्रापेक्षया गोत्रान्तरत्वमिति भावः । तथा च य एव जनकगोत्रसंबन्धः स एव प्रतिग्रहीतृगोत्रसंबन्ध इत्येवं न वक्तुं शक्यं, किंतु जनकगोत्रसंबन्धसदृशः प्रतिग्रहीतृगोत्रसंबन्ध इति जनकपालकयोर्गोत्रस्य मिथो गोत्रान्तरत्व( भिन्नगोत्रत्व )स्य स्पष्टत्वात्सगोत्रोऽप्ययं दत्तकोऽसगोत्रदत्तकसम एवेति तस्य मरणादौ यद् गोत्रान्तरप्राप्तिनिमित्तं त्र्यहाशौचमुच्यते तत्सम्यगेवेति भावः । तथा च सगोत्रसपिण्डेऽपि दत्तकीकृते त्र्यहाशौचमेव प्रवर्तत इति तात्पर्यम् । धर्मसिन्धुकाराणामयमाशयः— असगोत्राः पृथक्पिण्डाः० इति त्र्यहाशौचविधायके ब्रह्मपुराणे पृथक्पिण्डाः— असपिण्डा इति विशेषणात्सपिण्डसोदकभिन्ने दत्तीकृते त्र्यहाशौचविधिः प्रवर्तत इति लभ्यते । तथा 'भिन्नगोत्रः सगोत्रो वा' इति पराशरवाक्ये सगोत्रशब्दोपादानात्सपिण्डसोदके दशाहाद्येव प्रवर्तत इति सूचितम् । अन्यथा सगोत्रपदमनुक्त्वा तत्स्थाने 'सपिण्डो वा' इत्येवावक्ष्यदिति । दत्तकमीमांसाकारादीनां मते साप्तपौरुषसापिण्ड्यस्य दशाहाशौचप्रयोजकत्वम् । साप्तपौरुषसापिण्ड्यं च समानगोत्रत्व एव भवति । तदुक्तम्—सगोत्रे खलु सापिण्ड्यं विज्ञेयं साप्तपौरुषम् । विगोत्रे तु सर्वत्र विज्ञेयं पाञ्चपौरुषम् । इति । अत एव न मातामहकुले 'दशाहं शावमाशौचं सपिण्डेषु विधीयते' इति दशाहाशौचप्रवृत्तिः । शुद्धदत्तकस्य जनककुले शरीरावयवान्वयरूपसाप्तपौरुषसापिण्ड्यसत्त्वेऽपि न समानगोत्रत्वम् । तस्य प्रतिग्रहीत्रेकगोत्रत्वात् । द्व्यामुष्यायणे जनकगोत्रानुवृत्त्या समानगोत्रत्वेऽपि साप्तपौरुषसापिण्ड्याभावः । साप्तपौरुषसापिण्ड्यापवादत्वेन दत्तकसापिण्ड्यस्य त्रैपौरुषस्यैवाभिधानादिति भावः । गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुत इति मनुवचनेन जनकगोत्रनिवृत्तिपूर्वकप्रतिगृहीतृगोत्रप्राप्तिरुच्यमाना सगोत्रदत्तकस्थल एवमेव निर्वाह्येति मनुवचनस्याप्यत्रैव तात्पर्यं बोध्यम् । अत एव दत्तकमीमांसायां 'जनकपरिग्रहीत्रोरेकगोत्रत्वेऽपि परिग्रहीत्रैव व्यपदेशः' इत्युक्तम् । परिग्रहीतृगोत्रेणैव व्यपदेशः कर्तव्यः । परिग्रहीतृमात्रगोत्र-

व्यपदेशेन परिग्रहीतुरेव पिण्डाशौचादावधिकारोऽभिधीयते न जनकस्य । गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधेति वचनादिति तदाशयः । यदि च सगोत्रदत्तकस्थले दातृप्रतिग्रहीत्रोर्गोत्रस्य भेदो नाङ्गी क्रियेत तर्हि 'अथ दत्तकक्रीतकृत्रिमपुत्रिकापुत्राः परपरिग्रहेणाऽऽर्षेण येऽत्र जातास्ते संगतकुलीना व्यामुष्यायणा भवन्ति' इति पैठीनसिनाऽविशेषेण सगोत्रदत्तकस्यापि व्यामुष्यायणत्वमुक्तमुपरुध्येत । दातृप्रतिग्रहीत्रोर्गोत्रस्यैक्यात । गोत्रद्वयभागित्वं हि व्यामुष्यायणत्वमिति सिद्धान्तादिति भावः ।

अत्रेदं बोध्यम्—यद्यपि 'दशाहं शावमाशौचं सपिण्डेषु विधीयते' इत्याद्याशौचविधायकवाक्यार्थपर्यालोचनया सापिण्ड्यस्याऽऽशौचहेतुत्वं प्रतीयते न गोत्रस्य, तथाऽपि सगोत्रत्वसमानाधिकरणमेव सापिण्ड्यमाशौचप्रयोजकमित्यवश्यं वक्तव्यम् । अन्यथा शुद्धदत्तकस्य जनककुले निर्वाप्यपिण्डान्वयसापिण्ड्याभावेऽप्यवयवान्वयसापिण्ड्यसत्त्वेन तत्राऽऽशौचप्रवृत्त्यापत्तेः । सामानाधिकरण्यसंबन्धेन सगोत्रत्वेन सापिण्ड्यस्य विशेषणे तु 'गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः' इति मनुवचनबलाज्जनकगोत्रनिवृत्तेः प्रतिग्रहीतृगोत्रप्राप्तेश्च सगोत्रत्वसामानाधिकरण्याभावात्तादृशसापिण्ड्यस्याऽऽशौचप्रवर्तकत्वाभावः । अत एवेदं सापिण्ड्यनिमित्तकमाशौचं मातामहकुले न प्रवर्तते । गोत्रभेदात् । किंतु 'त्र्यहं मातामहाचार्यश्रोत्रियेष्वशुचिर्भवेत्' इति बृहस्पतिवचनात्संबन्धनिमित्तकं त्रिरात्रमाशौचं प्रवर्तते । नन्वेवमपि सगोत्रशुद्धदत्तकस्थले वचनबलाज्जनकगोत्रनिवृत्तिपूर्वकप्रतिग्रहीतृगोत्रप्राप्तावपि दातृप्रतिग्रहीत्रोर्गोत्रस्यैक्यात्सगोत्रत्वसमानाधिकरणसापिण्ड्यस्य दुर्वारत्वेन तादृशशुद्धदत्तकस्यापि जनककुल आशौचापत्तिरिति चेन्न । जनकगोत्रनिवृत्तेरभिधानबलाद्दत्तकदृष्ट्या जनकगोत्रे स्थितस्य जनकसंबन्धित्वस्य निवृत्त्या प्रतिग्रहीतृसंबन्धित्वस्य च प्रवृत्त्या जनकपालकयोर्गोत्रैक्यस्याभावात् । जनकसंबन्धप्रतिग्रहीतृसंबन्धरूपोपाधिभेदाद्गोत्रभेद इति यावत् । ततश्च जनकपालकयोर्भिन्नगोत्वेनासगोत्रत्वाविशेषाद्दानेन जनकगोत्रनिवृत्त्या प्रतिग्रहविधिबलात्प्रतिग्रहीतृगोत्रस्यैवावशेषेण सगोत्रशुद्धदत्तकस्यापि नैव जनककुले सगोत्रत्वसमानाधिकरणसापिण्ड्यमिति नाऽऽशौचप्रवृत्तिप्रसङ्गः । किंच सगोत्रदत्तकस्थले यदि दातृप्रतिग्रहीत्रोर्गोत्रस्य भेदो नाङ्गी क्रियेत तर्हि सगोत्रदत्तके व्यामुष्यायणव्यवहारस्य विलय एव स्यादिति तादृशस्थले जनकपालकयोर्गोत्रभेदकल्पनस्याऽऽवश्यकत्वात् । गोत्रद्वयभागित्वं हि व्यामुष्यायणत्वमिति सिद्धान्तादिति भावः । नन्वेवमपि व्यामुष्यायणदत्तके प्रतिग्रहीतृगोत्रसंबन्धवद्दातृगोत्रसंबन्धस्यापि सत्त्वेन तादृशदत्तकस्य जनककुले सगोत्रत्वसमानाधिकरणसापिण्ड्यस्याक्षत्या तत्राऽऽशौचप्रवृत्त्यापत्तिरिति चेत् ।

दत्तकेऽकृतोद्वाहे पश्चाज्जातस्यौरसस्य विवाहे न परिवेदनदोषः। न वा दत्तकस्या-

मैवम् । इष्टापत्तेः । दशाहाशौचप्रवृत्त्यापत्तिरिति चेत् । तदपि न । गोत्रान्तरा-नाक्रान्तत्वे सति सगोत्रत्वसमानाधिकरणसापिण्ड्यस्यैव दशाहाशौचहेतुत्वाङ्गीकारात् । दत्तकस्तु द्विविधोऽपि गोत्रान्तराक्रान्त एव । तत्र शुद्धो जनकगोत्रनिवृत्तिपूर्वकप्र-तिग्रहीतृगोत्राक्रान्तः । द्व्यामुष्यायणस्तु जनकगोत्रसमानाधिकरणप्रतिग्रहीतृगोत्राक्रान्त इत्यन्यत् । गोत्रान्तराक्रान्तत्वादेव च प्रतिग्रहीतृगोत्रमादाय शुद्धदत्तकप्रतिग्रहीत्रोः सगोत्रत्वं न भवति । यद्गोत्रमादाय दत्तकप्रतिग्रहीत्रोः सगोत्रत्वं वक्तव्यं तस्य गोत्रस्य दत्तकनिरूपितमुख्यस्वगोत्रत्वाभावेन गोत्रान्तरत्वादिति भावः । जन्मसमस-मयं संसक्तं गोत्रं स्वगोत्रम् । तदुत्तरं संसक्तं गोत्रान्तरमित्यर्थः । नापि व्यामु-ष्यायणतज्जनकयोर्जनकगोत्रमादाय सगोत्रत्वं वक्तुं शक्यम् । तस्य प्रतिग्रहीतृगो-त्राक्रान्तत्वेन गोत्रान्तराक्रान्तत्वादेवेत्यर्थः । न चैवं कन्याया भर्तृकुले दशाहा-शौचं न स्यात् । तस्या अपि ‘ स्वगोत्राद् भ्रश्यते नारी विवाहात्सप्तमे पदे ’ इति स्मृतेर्जनकगोत्रनिवृत्तिपूर्वकभर्तृगोत्राक्रान्तत्वेन गोत्रान्तरानाक्रान्तत्वरूपविशेषणा-भावेन विशिष्टस्याप्यभावेन दशाहाशौचहेतुसगोत्रत्वसमानाधिकरणसापिण्ड्याभावादिति वाच्यम् । ‘ एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके ’ इति स्मृत्या पिण्डादिकार्ये भार्याया भर्तृतादात्म्याभिधानेन भर्तृनिष्ठस्य दशाहाशौचप्रवृत्तिहेतुभूतस्य गोत्रान्तरानाक्रान्तत्वविशिष्टसगोत्रत्वसमानाधिकरणसापिण्ड्यस्य तद्भार्यायामतिदेशकर-णात् । किंच सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी । पिण्डश्चोदकदानं च आशौचं च तदानुगम् । इति हारलतायां शङ्खलिखितवचनानुसारादाशौचादौ गोत्रसापिण्ड्ययोर्मिलितयोर्हेतुत्वावगमेन सापिण्ड्यवद्गोत्रस्याप्याशौचनिमित्तत्वं सिध्य-ति । न चैवं केवलसगोत्रत्वस्यैवाऽऽशौचनिमित्तत्वमास्तां किं सापिण्ड्यसहकारेणेति वाच्यम् । तथा सति भिन्नकुलयोर्भिन्नशाखिनोः ‘ आपटे—कानिटकर ’ उपा-ख्ययोः कौशिकगोत्रयोरत एव सर्वथाऽसपिण्डयोरपि सगोत्रत्वेन परस्परमाशौचप्रवृ-त्त्याऽतिव्याप्त्यापत्तेः । एवं तथाभूतयोर्भिन्नावान्तरजातीययोरपि कोंकणस्थदेशस्थयोः कोंकणस्थकऱ्हाडयोः कऱ्हाडमाध्यंदिनयोश्चापि मिथ आशौचप्रवृत्त्या बहु व्याकुली स्यादिति ।

एवं दत्तकस्य विवाहाभावेऽपि दत्तकग्रहणानन्तरं जातस्यौरसस्य पूर्वं विवाहे कृतेऽप्यथवा सोदर्याग्रजस्याविवाहेऽपि दत्तकस्य पूर्वं विवाहे न परिवित्तिपरिवे-त्तृत्वदोष इत्याह—**तथा दत्तकेऽकृतोद्वाह इति** । ज्येष्ठे भ्रातरि सोदरे विवाह-रहिते सति कृतदारपरिग्रहस्तदनुजः परिवेत्ता ज्येष्ठस्तु परिवित्तिरिति शास्त्रे दोष-

अजसोदरात्पूर्वं विवाहकरणेऽपि क्षतिः । ननु शुद्धदत्तकस्य जनककुले सापिण्ड्यविच्छेदस्य दर्शितत्वात्तत्र विवाहः प्रसज्येत । प्रसज्येत च द्व्यामुष्यायणस्यापि त्रिपुरुषानन्तरितकन्यासंततिपरम्परया विवाहः । नैवम्—

असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥

---

वत्त्वेन व्यवह्रियते । दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते । परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः । परिवित्तिः परिवेत्ता यया च परिविद्यते । सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः ( म० स्मृ० ३ । १७१—१७२ ) इति वचनेन परिवित्त्यादीनां दोषवत्त्वाभिधानात् । स दोषो दत्तकविषये नास्तीत्यर्थः । पितृव्यपुत्रान् सापत्नान् परनारीसुतांस्तथा । दाराग्निहोत्रसंयोगे न दोषः परिवेदने । परनारीसुता दत्तकादयः । इत्यादिवसिष्ठादिवचनादिति भावः । अत्राधिकं दत्तकमीमांसायां तट्टीकायां च मत्कृतायां द्रष्टव्यम् ।

शङ्कते—नन्विति । सापिण्ड्यविच्छेदस्येति । गोत्ररिक्थे० ( म० स्मृ० ९ । १४२ ) इति मनुवचनेन शुद्धदत्तकस्य जनकगोत्रपिण्डानिवृत्तेराभिधानेन शुद्धदत्तकस्य जनककुले सापिण्ड्यविच्छेद इत्यर्थः । दत्तकचन्द्रिकाकारमते पिण्डान्वयसापिण्ड्यस्यैव पुरस्कारादिति तद्भावः । तथा च शुद्धदत्तकस्य जनककुले विवाहः प्रसज्जते । तथा द्व्यामुष्यायणस्यापि । यद्यपि द्व्यामुष्यायणस्य जनककुले सापिण्ड्यविच्छेदो नास्ति किंतु सापिण्ड्यमस्ति तथाऽपि तत्त्रिपुरुषमेवेति त्रिपुरुषादूर्ध्वं जनककुले तस्यापि विवाहः प्रसज्जत इति शङ्काशयः । एतां शङ्कामपाकरिष्यन्नाह—नैवमिति । असपिण्डा च या मातुरिति । एतन्मनुवचनस्यार्थो विस्तरेण दत्तकमीमांसाव्याख्यायां मञ्जर्यां निरूपितस्तत्र द्रष्टव्यः । अत्र तु प्रकृतोपयोगी संक्षेपेणार्थो वर्ण्यते । तत्रैतावान् विशेषः—दत्तकमीमांसाकारस्यैकशरीरावयवान्वयरूपस्यैव सापिण्ड्यस्याभिप्रेतत्वेन शुद्धदत्तकस्यापि जनककुले तदस्त्येव सप्तपुरुषावधिकम् । प्रतिग्रहीतृकुले त्वसंभवात्सापिण्ड्यं सर्वथा नास्ति । दत्तकचन्द्रिकाकारस्य च पिण्डान्वयरूपनिर्वाप्यसापिण्ड्यस्यैवाभिप्रेतत्वेन शुद्धदत्तकस्य जनककुले तत्सुतरां नास्ति । प्रतिग्रहीतृकुले यद्यपि तदस्ति तथाऽपि तत्त्रिपुरुषमेव । दत्तकमीमांसाव्याख्यायां मञ्जर्यां दत्तकमीमांसाकाराभिप्रेतसापिण्ड्यानुसारेण मनुवचनार्थो वर्णितः । अत्र तु दत्तकचन्द्रिकाकाराभिप्रेतसापिण्ड्यानुसारेण तदर्थः संक्षेपेण निरूप्यत इति । यादृशी कन्या वोढव्या तामिदानीं दर्शयति । मातुर्या सपिण्डा न भवति पितुश्च या सगोत्रा न भवति तादृशी कन्या दारत्वसंपादके

चकारात्पितुरसपिण्डा चेति मनुवचने ग्रहीतृमात्रगोत्रस्यापि दत्तकस्य जनक-स्यापि सपिण्डासगोत्रावर्जनाय पितुरितिपदोपादानात् । न च तथाऽपि दत्त-कस्य पितुरपि दत्तकत्वे त्रिपुरुषानन्तरितकन्यासंततेर्विवाहः केन वार्यते ।

---

विवाहे प्रशस्तेति । अस्मिन् मनुवचने 'असगोत्रा च या पितुः' इत्यत्रत्यच-कारेणासपिण्डेत्यनुकृष्य पितुर्या सपिण्डा न भवति तादृशी कन्या परिणेयेति व्याख्येयम् । अत्र पितृसपिण्डानिषेधके 'असपिण्डा च या पितुः' इति वाक्ये पितृपदं जनकपितृपरम् । तत्रैव पितृशब्दस्य मुख्यत्वात् । नतु पालकपितृपरम् । मुख्यवृत्तिपरित्यागेन जघन्यवृत्त्याश्रयणायोगात् । ततो दत्तकचन्द्रिकाकारमते पिण्डा-न्वयरूपनिर्वाप्यसापिण्ड्यस्यैव सत्त्वेन शुद्धदत्तकस्य जनककुले सापिण्ड्याभावेऽपि जनकपितृनिरूपितसापिण्ड्यसत्त्वाज्जनकपितृकुलजा कन्या शुद्धदत्तकस्य भार्या न भवितुमर्हति । एतदर्थमेव हि 'असपिण्डा च या पितुः' इत्युक्तम् । यदि चात्र पितृपदं पालकपितृपरं गृह्येत तदा पालकपितुर्या सपिण्डा न भवति तादृशी कन्या परिणेयेत्यर्थः स्यात् । तथा च पालकपितृकुलजायाः कन्याया व्यावृत्तावपि जनकपितृकुलजा कन्या न व्यावृत्ता स्यात् ।

ननु पालकपितुर्या सपिण्डा भवति सा स्वस्यापि सपिण्डा भवत्येव । दत्त-कचन्द्रिकाकारमते शुद्धदत्तकस्य पालककुल एव सापिण्ड्यसत्त्वात् । ततश्च पितु-रित्यनुक्त्वा तत्स्थाने स्वसमानार्थकात्मशब्दप्रयोगेण 'असपिण्डा च याऽऽत्मनः' इत्येव वक्तव्यम् । अथवा तदपि न वक्तव्यम् । तदभावेऽपि तु प्रत्यासत्त्या स्वनिरूपितसापिण्ड्याभाववतीत्यर्थः स्यादिति जनकपितृकुलजा कन्या शुद्धदत्तकस्य परिणेया स्यादित्यनिष्टं प्रसज्येत । अत्र स्वशब्देन बुद्धिस्थत्वेन संनिहितः प्रकर-णाद्दत्तकः परामृष्ट इति बोध्यम् । एतदनुसंधायैवोक्तम्—ग्रहीतृमात्रगोत्रस्येत्यादिपदोपा-दानादित्यन्तम् । **ग्रहीतृमात्रगोत्रस्येति** । शुद्धदत्तकस्येत्यर्थः । तस्य प्रतिग्रहीत्रे-कगोत्रत्वादिति भावः । **जनकस्यापीति** । दत्तकमीमांसाकारमते जनकपितृसगोत्राव्या-वृत्तये 'असगोत्रा च या पितुः' इति । दत्तकचन्द्रिकाकारमते जनकपितृस-पिण्डाव्यावृत्तये 'असपिण्डा च या पितुः' इति । उभयत्रापि पितृपदं मुख्य-पितृपरमेवोक्तयुक्तेः । नन्वनया रीत्या शुद्धदत्तकस्य स्वजनकपितृकुलजायाः कन्याया व्यावर्तनेऽपि शुद्धदत्तकस्य प्रतिग्रहीता यः पिता तस्यापि दत्तकत्वे ( व्यामुष्या-यणत्वे ) सति तस्य जनकपुरुषत्रयात्मककुले शुद्धदत्तकस्य विवाहः स्यात् । व्यामुष्यायणस्य जनकपुरुषत्रयात्मककुले शुद्धदत्तकजनकपितृनिरूपितसापिण्ड्याभावादिति चेन्न । 'असपिण्डा च या पितुः' इत्यत्रत्यपितृपदेन युगपदभिधावृत्तिलक्षणावृत्त्यो-

पितृसापिण्ड्यसगोत्रत्वयोरभावादिति वाच्यम् । यतो विवाहे नैतत्सापिण्ड्यमुपयुज्यते । किंतु सर्वसाधारणं परिभाषितं पितृपक्षे साप्तपौरुषं मातामहपक्षे पाञ्चपौरुषं चेति न काऽप्यनुपपत्तिः । तत्प्रपञ्चस्तु तत्र तत्र वक्तव्य इति ॥

---

लक्ष्यानुरोधेनाङ्गीकरणाद्गौणमुख्यौ द्वावपि पितरौ गृह्येते । तेन पालकपितुरपि या सपिण्डा न भवति तादृशी कन्या वोढव्येत्यर्थस्य संपन्नत्वाच्छुद्धदत्तकस्य यः प्रतिग्रहीतृपिता व्यामुष्यायणस्तज्जनककुलजायाः कन्यायाः शुद्धदत्तकजनकपितृनिरूपितसपिण्डत्वाभावेऽपि शुद्धदत्तकपालकपितृनिरूपितसापिण्डत्वाक्रान्तत्वान्न तादृश्यपि कन्या शुद्धदत्तकस्य भार्या भवितुमर्हति । नचैवमपि शुद्धदत्तकस्य यः प्रतिग्रहीतृपिता व्यामुष्यायणस्तस्य स्वजनककुले सापिण्ड्यसत्त्वेऽपि कार्ष्णाजिनिवचनाज्जनकादित्रिपुरुषव्याप्त्यैव । ततश्च त्रिपुरुषात्मककुलजायाः कन्यायाः शुद्धदत्तकपालकपितृनिरूपितसपिण्डत्वेनाविवाह्यत्वेऽपि पुरुषत्रयादूर्ध्वं सापिण्ड्याभावेन तादृशपुरुषत्रयात्मककुलादूर्ध्वं विद्यमानायाः कन्यायाः शुद्धदत्तकपालकपितृनिरूपितसगोत्रत्वसपिण्डत्वयोरभावेन तादृशी कन्या शुद्धदत्तकस्य परिणेया स्यादित्यनिष्टमापद्येतेति चेत् । अत्र बालबोधार्थमुदाहरणम्—चै० वै० उग्र० आ० इत्युत्तरोत्तरं चत्वार औरसाः । तत्र आ० संज्ञकस्यात्रिगोत्रोद्भवस्य दत्तकः पुत्रो भारद्वाजीयः श्रा० इति, स च व्यामुष्यायणः । तस्य श्रा०संज्ञकस्य पुत्रः काश्यपगोत्रः भा० इति, स च शुद्धदत्तकः । श्रा०संज्ञकस्य व्यामुष्यायणस्य जनकपितृपितामहप्रपितामहाः फा० मा० पौ० इत्याख्याः । पौ० इत्यस्यापि पितृपितामहप्रपितामहाः मार्ग० का० आश्वि० इत्येवंनामकाः । अत्र श्रा०संज्ञकस्य व्यामुष्यायणस्य फा० मा० पौ० इत्येवं पित्रादित्रयात्मककुले सापिण्ड्यं वर्तते । तदूर्ध्वं मार्ग० का० आश्वि० इत्येवं वृद्धप्रपितामहादित्रयात्मककुले सापिण्ड्यं नास्तीति वृद्धप्रपितामहादित्रयात्मककुलजा कन्या शुद्धदत्तकस्य परिणेया भवेत् । तादृशकन्यायाः शुद्धदत्तकजनकपालकोभयपितृनिरूपितसपिण्डत्वाभावाज्जनकपितृनिरूपितसगोत्रत्वाभावाच्चेति । अत्रोच्यते—विवाहविषये दत्तकसापिण्ड्यमपि त्रिपुरुषं नोपयुज्यते—नाम—अविवाह्यत्वप्रयोजकं त्रिपुरुषसापिण्ड्यं न भवतीत्यर्थः । किंतु सपिण्डता तु पुरुषे सप्तमे विनिवर्तते, ( म० स्मृ० ५ । ६० ) पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ( या० स्मृ० १ । ५३ ) पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा । सपिण्डता निवर्तेत सर्ववर्णेष्वयं विधिः । ( शातातपः ) इत्यादिवचनैः परिभाषितं सर्वसंमतं पितृपक्षे साप्तपौरुषं मातामहपक्षे च पाञ्चपौरुषं सापिण्ड्यमविवाह्यत्वप्रयोजकमाश्रीयते । तेन निरुक्तोदाहरणस्थले न कश्चिदतिप्रसङ्ग इति भावः ॥

अथ पञ्चमं प्रकरणम् ।

अथ दत्तकविभागः । तत्र बृहस्पतिः—

एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः ।
शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम् ॥

शेषाणां ये तत्रांशभागित्वेन निषिद्धास्तेषाम् । आनृशंस्यं दया । प्रजीवनं भरणम् । तथा यमः—

पुत्रास्तु द्वादश प्रोक्ता मुनिभिस्तत्त्वदर्शिभिः ।

---

( अथ पञ्चमं प्रकरणम् ) ।

अथ दत्तकस्य दायविभागः कीर्त्यते । एक एवेति । बृहस्पतिवचनमिदम् । एतत्समानानुपूर्वीकं वचनं मनुस्मृतौ नवमाध्याये दृश्यते । तदर्थः कुल्लुकभट्टेन मन्वर्थमुक्तावल्यामेवं वर्णितः—व्याध्यादिना प्रथममौरसपुत्राभावे क्षेत्रजादिषु कृतेषु पश्चादौषधादिना विगतव्याधेरौरस उत्पन्ने सतीदमुच्यते । औरस एक एव पुत्रः पितृधनस्वामी । शेषाणां ये तत्रांशभागित्वेन निषिद्धास्तेषाम् । क्षेत्रजस्य षष्ठांशादेरुक्तत्वेन क्षेत्रजव्यतिरिक्तानां शेषाणां दत्तकक्रीतादीनामित्यर्थः । आनृशंस्यार्थं पापसंबन्धाभावार्थं प्रजीवनं ग्रासाच्छादनं दद्यात । ग्रासाच्छादनदानाभावे पापसंबन्ध उक्तः 'सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा । ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत् ( म० स्मृ० ९ । २०२ ) । अददत्पापमाप्नोति ' इत्यादिना । एतच्च दत्तकादीनामौरसप्रतिकूलत्वे निर्गुणत्वे च वेदितव्यम् । अत एव वसिष्ठेन पूर्वं गृहीतानां दत्तकादीनामौरसोत्पत्त्यनन्तरं चतुर्थांशभागित्वमुक्तं संगच्छते । 'तस्मिंश्चेत्प्रतिगृहीत औरस उत्पद्येत चतुर्थभागभागी स्याद्दत्तकः '। अत्र दत्तकग्रहणं क्रीतकृत्रिमादीनां प्रदर्शनार्थम्, पुत्रीकरणाविशेषादिति । औरसानुकूलत्वे गुणवत्त्वे च दत्तकादीनां चतुर्थांशभागित्वमित्यर्थः । कात्यायनेन तु सवर्णासवर्णभेदेन चतुर्थांशप्रजीवनयोर्विभागो व्यवस्थापितः—उत्पन्ने त्वौरसे पुत्रे चतुर्थांशहराः सुताः । सवर्णाः, असवर्णास्तु ग्रासाच्छादनभागिन इति । सवर्णा दत्तकक्षेत्रजादयस्ते सत्यौरसे चतुर्थांशहराः । असवर्णाः कानीनगूढोत्पन्नसहोढजपौनर्भवास्ते त्वौरसे सति न चतुर्थांशहराः ' किंतु ग्रासाच्छादनभाजना इति तदर्थः । क्षेत्रजस्य तु मनुना विशेषो दर्शितः—षष्ठं तु क्षेत्रजस्यांशं प्रदद्यात्पैतृकाद्धनात् । औरसो विभजन् दायं पित्र्यं पञ्चममेव वा । प्रतिकूलत्वनिर्गुणत्वसमुच्चये षष्ठमंशम्, एकतरसद्भावे पञ्चममिति विवेक्तव्यमिति ।

तथा यमवचनं प्रदर्शयति—पुत्रास्तु द्वादशेत्यादि । मनुस्मृतौ तु ' पुत्रान्

तेषां षड् बन्धुदायादाः षडदायादबान्धवाः ॥
स्वयमुत्पादितस्त्वेको द्वितीयः क्षेत्रजः स्मृतः ।
तृतीयः पुत्रिकापुत्रो जातिधर्मविदो विदुः ॥
पौनर्भवश्चतुर्थस्तु कानीनः पञ्चमः स्मृतः ।
गृहे च गूढ उत्पन्नः षडेते पिण्डदायिनः ॥
अपविद्धः सहोढश्च दत्तः कृत्रिम एव च ।
क्रीतश्च पञ्चमः पुत्रो यश्चोपनयते स्वयम् ॥
इत्येते संकरोत्पन्नाः षडदायादबान्धवाः ।

नारदः—औरसः क्षेत्रजश्चैव पुत्रिकापुत्र एव च ।

---

द्वादश यानाह नृणां स्वायंभुवो मनुः' ( म० स्मृ० ९ । १५८ ) इति पूर्वार्धं पठितम् । उत्तरार्धं तु सममेव । कुल्लूकभट्टकृता तद्व्याख्या त्वित्थम्—औरसादयो ये तत्त्वज्ञैर्द्वादश पुत्राः प्रोक्तास्तेषां मध्ये प्रथमे षट् पुत्रा बन्धुदायादा बान्धवा गोत्रदायादाश्च भवन्ति । बन्धुत्वेन सपिण्डसमानोदकानां पिण्डोदकदानादि कुर्वन्ति, अनन्तराभावे च गोत्रदायं गृह्णन्ति । पितृरिक्थभाक्त्वस्य 'पुत्रा रिक्थहराः पितुः' ( म० स्मृ० ९ । १८५ ) इति मनुना द्वादशविधपुत्राणामेवाभिधीयमानत्वात् । षडदायादेति । उत्तरे षण्न गोत्रधनहरा भवन्ति । बान्धवास्तु भवन्त्येव । ततश्च बन्धुकार्यमुदकक्रियादि कुर्वन्ति । एवं च न दायादा अदायादा इति दायादशब्देन नञ्समासं पूर्वं कृत्वा पश्चात्, अदायादाश्च ते बान्धवाश्चादायादबान्धवा इत्येवमदायादशब्देन बान्धवशब्दस्य कर्मधारयः कर्तव्य इत्यर्थः । एतेन यन्मेधातिथिना दायादबान्धवशब्दयोः पूर्वं समासं कृत्वा पश्चात्तयोर्नञा समासेनोत्तरेषां षण्णामदायादत्वमबान्धवत्वं चोक्तं तत्परास्तम् । कानीनं च सहोढं च क्रीतं पौनर्भवं तथा । स्वयंदत्तं निषादं च गोत्रभाजः प्रचक्षते । इति गौतमेन तेषां बन्धुत्वस्याभिहितत्वादिति भावः । निषादः शौद्रः । प्रथमे षडुत्तरे च षण्मनुना ( ९ । १५९, १६० ) श्लोकाभ्यां प्रदर्शिताः । बन्धुदायादशब्दस्यार्थं केचिदित्थं वर्णयन्ति—प्रतिग्रहीतृपितुर्बन्धूनां सपिण्डानामपि ये दायं हरन्ति ते बन्धुदायादाः । प्रतिग्रहीतृपितुरेव ये दायं हरन्ति नतु तद्बन्धूनां तेऽबन्धुदायादा इति । यमस्तु पूर्वषट्कमेवं क्रमेण दर्शयति—स्वयमुत्पादित इति । औरसः, क्षेत्रजः, पुत्रिकापुत्रः, पौनर्भवः, कानीनः, गूढोत्पन्नश्चेति प्रथमे षडित्यर्थः । उत्तरषट्कमाह—अपविद्ध इति । अपविद्धः, सहोढः, दत्तः, कृत्रिमः, क्रीतः, स्वयमागतश्चेत्युत्तरे षडिति बोध्यम् ।

नारदमतेन द्वादश पुत्रान् दर्शयति—औरसः क्षेत्रजश्चैवेति । औरसा-

कानीनश्च सहोढश्च गूढोत्पन्नस्तथैव च ॥
पौनर्भवोऽपविद्धश्च दत्तः क्रीतः कृतस्तथा ।
स्वयं चोपगतः पुत्रा द्वादशैते प्रकीर्तिताः ॥
तेषां षड्बन्धुदायादाः षडदायादबान्धवाः ।
पूर्वः पूर्वः स्मृतो ज्येष्ठो जघन्यो यो य उत्तरः ॥
क्रमादेते प्रवर्तन्ते मृते पितरि तद्धने ।
ज्यायसो ज्यायसोऽभावे जघन्यो यो य आप्नुयात् ॥

पूर्वपूर्वाभावे उत्तरोत्तरेषां द्रविणार्हत्वमित्यर्थः ।

औरसक्षेत्रजपुत्रिकापुत्रपौनर्भवकानीनगूढोत्पन्नसहोढदत्तकक्रीतस्वयमुपागतापविद्धयत्रक्वचनोत्पादितानभिधाय विष्णुः—तेषां पूर्वः पूर्वः श्रेयान् । स एव दायहरः स चान्यान् बिभृयात् ।

औरसपुत्रिकापुत्रक्षेत्रजगूढजकानीनपौनर्भवदत्तकक्रीतकृत्रिमस्वयंदत्तसहोढापविद्धानभिधाय याज्ञवल्क्यः—पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः ।

मनुः—न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः ।
तथा—श्रेयसः श्रेयसोऽभावे पापीयान्रिक्थमर्हति ।

---

रभ्य गूढोत्पन्नान्ताः प्रथमं षट्, पौनर्भवमारभ्य स्वयमागतपर्यन्ताश्चोत्तरे षट् । पूर्वः पूर्व इति । नाम्नप्रागुक्तद्वादशपुत्रमध्ये प्रथमः प्रथमो ज्यायानुत्तर उत्तरश्च जघन्यः । जघनमिव जघन्यः । इवार्थे 'शाखादिभ्यो यः' ( पा० सू० ५ । ३ । १०३ ) प्रत्ययः । अधम इत्यर्थः । पितरि मृते सति एते पुत्राः क्रमेण पूर्वपूर्वाभावे उत्तरोत्तरे पितृधनाधिकारिणो भवन्तीत्यर्थः ।

औरसक्षेत्रजेति । औरसप्रभृति यत्र क्वचनोत्पादितपर्यन्तान्क्रमेण द्वादश पुत्रान्संकीर्त्य विष्णुस्मृतिकार आह—तेषां पूर्व इति । निरुक्तद्वादशपुत्राणां मध्ये प्रथमः प्रथमः श्रेष्ठः । स एव च पितृधनं हरेदन्यांश्च परिपालयेदित्यर्थः ।

औरसपुत्रिकापुत्रेति । औरसपुत्रिकापुत्रादीनपविद्धान्तान् द्वादश पुत्रानभिधायाऽऽह याज्ञवल्क्यः—पिण्डद इति ( या० स्मृ० २ । १३२ ) । निरुक्तपुत्राणां मध्ये पूर्वपूर्वाभावे परः परः पिण्डदोंऽशहरश्च स्यादिति ।

मनुरपि तथाऽऽह—न भ्रातर इति ( म० स्मृ० ९ । १८५ ) । न सोदरभ्रातरो नापि पितरः, किंत्वौरसाभावे क्षेत्रजादयो गौणपुत्राः पितू रिक्थहरा भवन्तीत्यनेनोच्यते । औरसस्य तु 'एक एवौरसः पुत्रः' ( म० स्मृ० ९ । १६३ ) इत्यनेनैव सिद्धत्वादिति तदर्थः । श्रेयस इति ( म०

बहवश्चेत्तु सदृशाः सर्वे रिक्थस्य भागिनः ॥

सदृशा गुणेन, औरसत्वक्षेत्रजत्वाद्युपाधिना वा । श्रेयस औरसादेः । यवीयान् न्यूनः क्षेत्रजादिरित्यर्थः ।

तथा—औरसक्षेत्रजौ पुत्रौ पितृ रिक्थस्य भागिनौ ।
दशापरे च क्रमशः पितृरिक्थांशभागिनः ॥

दश दत्तकादयः । हारीतः—स्वयमुत्पादितः क्षेत्रजः पौनर्भवः कानीनः पुत्रिकापुत्रो गूढोत्पन्नश्चेति बन्धुदायादाः । दत्तः क्रीतोऽपविद्धः सहोढः स्वयमुपागतः सहसादृष्टश्चेत्यबन्धुदायादाः ।

मनुः—पुत्रान्द्वादश यानाह नृणां स्वायंभुवो मनुः ।
तेषां षड् बन्धुदायादाः षडदायादबान्धवाः ॥
औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च ।
गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवास्तु षट् ॥
कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा ।
स्वयंदत्तश्च शौद्रश्च षडदायदाबान्धवाः ॥

---

स्मृ० ९ । १८४ ) । औरसादीनां पुत्राणां मध्ये पूर्वपूर्वस्य श्रेष्ठस्यौरसादेरभावे परः परो यवीयान् न्यूनः क्षेत्रजादी रिक्थमर्हति । यदि तु गुणेनौरसत्वक्षेत्रजत्वाद्युपाधिना वा समानरूपा बहवः पुत्रास्तदा सर्व एव विभज्य रिक्थं गृह्णीयुरित्यर्थः । औरसक्षेत्रजाविति ( म० स्मृ० ९ । १६५ ) । औरसः क्षेत्रजश्चेत्येतौ द्वौ पुत्रौ पितृधनहरौ स्याताम् । तत्रौरसः समग्रधनं हरेत्, क्षेत्रजस्तु पञ्चमं षष्ठं वांऽशं हरेदिति विशेषः । अन्ये पुनर्दश दत्तकादयः पुत्रा गोत्रभाजो भवन्ति, ' पूर्वाभावे परः परः ' इत्येवं क्रमेण धनांशहराश्च भवन्तीत्यर्थः ।

हारीतोऽप्याह—स्वयमुत्पादितः, क्षेत्रजः, पौनर्भवः, कानीनः, पुत्रिकापुत्रः, गूढोत्पन्नश्चेति षड् बन्धुदायादा भवन्तीति बन्धुदायादाबन्धुदायादशब्दयोः पूर्ववदर्थद्वयं बोध्यम् ।

**पुत्रान्द्वादशेति** ( म० स्मृ० ९ । १५८, १५९, १६० ) । अस्यार्थो यमवचनव्याख्यावसरे प्रारम्भ एवोक्तः । मनुस्मृतिटीकाकारेण सर्वज्ञनारायणेनास्य मनुवचनस्य लिखितोऽर्थोऽतीव स्पष्टमुद्बोधक इति कृत्वा सोऽर्थोऽत्र दीयते—बन्धुदायादाः—बन्धूनां पितृव्यादीनां पुत्रपत्नीदुहित्राद्यभावे तद्धनस्याऽऽदातारः पूर्वे षडित्यर्थः । उत्तरे षण्ण दायादाः । न दायग्राहकाः पितृव्यादीनां, किंतु पुत्रपत्न्यादिविरहेऽपि तेषां गोत्रजा एव धनहरा इति ।

बौधायनः—औरसं पुत्रिकापुत्रं क्षेत्रजं दत्तकृत्रिमौ ।
गूढं चैवापविद्धं च रिक्थभाजः प्रचक्षते ॥
कानीनं च सहोढं च क्रीतं पौनर्भवं तथा ।
स्वयंदत्तं निषादं च गोत्रभाजः प्रचक्षते ॥

एतच्च कानीनादीनां गोत्रमात्रभागित्वकथनमौरसादीनां कस्यापि संभवेऽश-हरत्वप्रतिषेधार्थम् । सहोढदत्तकक्रीतस्वयमुपागतापविद्धशौद्रानभिधायौरसादीन्परामृश्य पुनर्वसिष्ठः—यस्य तु सर्वेषां वर्णानां न कश्चिद्दायादः स्यादेते तस्य भागं हरेयुः । औरसपुत्रिकापुत्रक्षेत्रजकानीनगूढोत्पन्नापविद्धसहोढपौनर्भवदत्तक-स्वयमुपागतकृतक्रीतानभिधाय देवलः—

एते द्वादश पुत्रास्तु संतत्यर्थमुदाहृताः ।
आत्मजाः परजाश्चैव लब्धा याढच्छिकास्तथा ॥
तेषां षड् बन्धुदायादाः पूर्वेऽन्ये पितुरेव षट् ।
विशेषश्चापि पुत्राणामानुपूर्व्या विशिष्यते ॥

---

बौधायनमतं प्रदर्शयति—औरसमिति । औरसः, पुत्रिकापुत्रः, क्षेत्रजः, दत्तः, कृत्रिमः, गूढः, अपविद्धश्चेत्येवंसमाख्यान् पुत्रान् धनभागिन इति कथयन्ति । **कानीनं चेति** । कानीनः, सहोढः, क्रीतः, पौनर्भवः, स्वयंदत्तः, निषादश्चेत्येतान् केवलं गोत्रभाज इति प्रचक्षते । **एतच्चेति** । अत्र कानीनादिपुत्राणां यद्बौधा-यनेन केवलगोत्रभागित्वमुक्तं तदौरसादीनामपविद्धपर्यन्तानां पूर्वश्लोकोक्तपुत्राणां मध्ये कस्याप्यस्तित्वसंभवे कानीनादीनां धनहरत्वनिषेधार्थं, न तु सर्वथा धनहरत्वनिषे-धार्थमिति बोध्यम् ।

**सहोढ इति** । सहोढादिशौद्रान्तान् पुत्रान् नामतोऽभिधायौरसादीन्परामृश्य वसिष्ठः पुनराह—**यस्य त्विति** । सर्वेषां वर्णानां ब्राह्मणक्षत्रियादिचतुर्वर्णानां मध्ये यस्य नान्यः कश्चिदपि दायादो धनग्रहणाधिकार्यस्ति तस्यैत औरसादयः पुत्रा धनं हरेयुर्गृह्णीयुरिति ।

औरसादिक्रीतान्तान्द्वादश पुत्रानुक्त्वा देवल आह स्म—**एते द्वादशेति** । औरसादिक्रीतान्तानां द्वादशानां पुत्राणां मध्ये केचिदात्मनो जाता औरसादयः । केचित्परस्माज्जाताः क्रीतकृत्रिमादयः, केचिल्लब्धा अपविद्धादयः, केचित्तु यदृच्छा-गताः स्वयंदत्तादयः, इत्येवंविधाः पुत्राः संतत्यर्थं—वंशप्रवृत्त्यर्थं प्रोक्ताः । तत्र प्रथमे षड् बन्धुदायादाः—बन्धूनां सपिण्डानामपि दायस्याऽऽदातारः, उत्तरे च षड्बन्धुदायादाः प्रतिग्रहीतृपितुरेव दायस्य ग्रहीतारो न तु तद्बन्धूनाम् । पुत्राणां

सर्वे ह्यनौरसस्यैते पुत्रा दायहराः स्मृताः ।
औरसे पुनरुत्पन्ने तेषु ज्यैष्ठ्यं न विद्यते ॥
तेषां सवर्णा ये पुत्रास्ते तृतीयांशभागिनः ।
हीनास्तमुपजीवेयुर्ग्रासाच्छादनसंभृताः ॥
कात्यायनः—उत्पन्ने त्वौरसे पुत्रे तृतीयांशहराः स्मृताः ।
सवर्णा असवर्णास्तु ग्रासाच्छादनभागिनः ॥

चतुर्थांशहराः स्मृता इति द्वितीयचरणे क्वचित्पाठः । वसिष्ठः—नास्मिंश्चेत्प्रतिगृहीते औरस उत्पद्यते स चतुर्थभागभागी यदि नाऽऽभ्युदयिकेषु प्रयुक्तं स्यात् । स प्रतिगृहीतः पुत्रः । आभ्युदयिकेषु यज्ञादिषु यद्यौरसेन प्रयुक्तं न स्यात् । प्रभूतं धनमिति शेषः ।

---

विशेषश्चापि तेषां क्रमावलम्बनो बोद्धव्यः । त एते सर्वे यस्यौरसः पुत्रो नास्ति तस्य धनाधिकारिणः सन्ति । औरसे समुत्पन्ने तु पूर्वं कृतानामप्येतेषां ज्येष्ठत्वं नास्ति । एतेषां पुत्राणां मध्ये ये सवर्णाः समानजातीयास्ते तृतीयांशभागिनो भवन्ति । ये तु हीना असवर्णाः पुत्रास्ते तु तृतीयांशं नैव लभन्तेऽपि तु ग्रासाच्छादनभागिनः सन्तस्तमौरसमाश्रित्य वर्तेरन्नित्यर्थः ।

कात्यायनोऽप्याह—उत्पन्ने त्वौरस इति । औरसे पुत्र उत्पन्ने तु सवर्णाः समानजातीया दत्तकादयः पुत्रास्ते तृतीयांशभागिनोऽथो असवर्णास्तु केवलं ग्रासाच्छादनं भजन्ते । केषुचित्पुस्तकेषु 'तृतीयांशहराः स्मृताः' इति द्वितीयचरणस्थाने 'चतुर्थांशहराः स्मृताः' इति पाठो दृश्यते । तदर्थस्तु व्यक्त एव । वसिष्ठेनाप्येवं प्रतिपाद्यते—दत्तके परिगृहीते तदनन्तरं यद्यौरसः पुत्र उत्पद्येत तदा स दत्तकश्चतुर्थांशभागी स्याद्यद्यौरसेनाभ्युदयप्रयोजनकेषु यज्ञादिकर्मसु प्रभूतं धनं न नियोजितं स्यादिति । अत्रोदाहरणं यथा—देवदत्तः कश्चिद्धनी । तेन स्वस्यापुत्रतामवधार्य चैत्रो दत्तकः पुत्रो गृहीतः । ततः कियताऽपि कालेन देवदत्तस्यौरसः पुत्रः संजातः । स च मैत्रनामा । अत्रौरसस्य मैत्रस्य यावानंशस्तच्चतुर्थांशं दत्तकश्चैत्रो लभते । नवाधिका नवती रूपका देवदत्तधनम् । तावानौरसस्य मैत्रस्यांशः । तच्चतुर्थांशो द्वादशाणकाधिकचतुर्विंशती ( २४ रू० १२ आ० ) रूपकाः । तावन्तं भागं दत्तकश्चैत्रो लभत इति निर्विवादम् । यदा तु दत्तकग्रहणानन्तरमौरसद्वयं संजातं तदा, एकस्यौरसस्य यावानंशस्तच्चतुर्थांशं दत्तकः पुत्रो गृह्णीयात् । मूलधनं पूर्वोक्तमेव । औरसौ समभागिनाविति प्रत्येकं चतुश्चत्वारिंशद्रूपका ( ४४ ) विभागः । तच्चतुर्थांश एकादश रूपकान् दत्तकः पुत्रो गृह्णीयात् । एवं यत्रौ-

अत्र नानाविधमुनिवचनानां परस्परविरोधपरिहारार्थमेवं व्याख्यायते । बृह-स्पतिवचने—औरसमात्रस्य धनभागित्वकथनमन्येषां भरणमात्रकथनं चासवर्णक्षे-त्रजदत्तकादिविषयम् । देवलकात्यायनवचनैकवाक्यत्वात् । नारदादिवचनेषु चौर-साद्यभावे क्षेत्रजदत्तकादीनामुक्तधनग्रहणविधिरपि सर्वधनग्रहणविषयः । दत्तक-ग्रहणानन्तरमौरसोत्पत्तौ तदौरसचतुर्थांशविधिर्वसिष्ठोक्तो दत्तकविषये ज्ञेयः । तथा देवलकात्यायनवचने तृतीयांशग्रहणविधिरत्युत्कृष्टगुणदत्तकविषयो वाच्यः ।

---

रसोत्पत्त्यनन्तरं पूर्वं गृहीतस्य दत्तकस्य तृतीयांशो देयत्वेन वर्ण्यते तत्रैक एवौ-रसश्चेत्तेन षट्षष्टी रूपकाः ( ६६ ) ग्राह्याः । त्रयस्त्रिंशद्रूपकास्तु ( ३३ ) दत्तकेनेति सममेव । औरसद्वये तु सपादमाणकषट्कं द्विचत्वारिंशच्च रूपकाः प्रत्येकं विभागः । तत्तृतीयांशः सपादमाणकद्वयं चतुर्दश रूपका दत्तकेन ग्राह्या इति ।

अथ निरुक्तबृहस्पति—यम—नारद—मनु—हारीत—बौधायन—वसिष्ठ—कात्यायनप्रोक्तना-नाविधवचनेषु परस्परमापाततो विरोधो दृश्यते तत्परिहारार्थं तद्वचनानि दत्तकच-न्द्रिकाकारेणैकवाक्यतया व्याख्यायन्ते । व्याख्याप्रकारं दर्शयति—**बृहस्पतिवचन इत्यादिना** । 'एक एवौरसः पुत्रः' इत्यादिवचनेन बृहस्पतिना यदौरसस्यैक-स्यैव धनहारित्वमथ चेतरेषां दत्तकादीनां ग्रासाच्छादनभागित्वमभिधीयते तदसवर्णा ये क्षेत्रजदत्तकादयस्तानुद्दिश्यैवेति मन्तव्यम् । तथा सति देवलकात्यायनवचनाभ्यां 'हीनास्तमुपजीवेयुर्ग्रासाच्छादनसंभृताः' 'असवर्णास्तु ग्रासाच्छादनभागिनः' इत्येवंरूपाभ्यां सहास्यैकवाक्यता भवति । नतु सामान्यतः सवर्णासवर्णोद्देशेनाभि-धीयते । तथा सति देवलकात्यायनाभ्यामसवर्णान् प्रत्येव ग्रासाच्छादनमभिधीयते, बृहस्पतिना तु सुवर्णान् प्रत्यपीति वाक्यभेदः स्यात् । स चायुक्तः । 'संभ-वत्येकवाक्यत्वे वाक्यभेदो हि दूषणम्' इत्यभियुक्तैरुक्तत्वादित्याशयः ।

नारदविष्णुयाज्ञवल्क्यादिवचनेषु योऽयमौरसादिपुत्राणां मध्ये पूर्वपूर्वाभावे क्षेत्र-जदत्तकादेरुत्तरोत्तरस्य पितृरिक्थग्रहणविधिरभिहितः स तु समग्रधनग्रहणं विषयीकृत्यो-क्त इति बोध्यम् । अत एव दत्तकग्रहणानन्तरमौरसोत्पत्तौ सत्यामौरसस्य यावानंशस्तच्चतुर्थांशो यो वसिष्ठेनोल्लिखितः स दत्तकमुद्दिश्य निर्दिष्ट इति विज्ञे-यम् । सर्वथौरसाभावे समग्रधनग्राहित्वं दत्तकस्य, औरसे तु सति तच्चतुर्थांश-ग्राहित्वं न समग्रधनग्राहित्वमिति यावत् ।

एतद्वत् 'तेषां सवर्णा ये पुत्रास्ते तृतीयांशभागिनः' इति वचने देव-लेन 'उत्पन्ने त्वौरसे पुत्रे तृतीयांशहराः स्मृताः' इति वचने कात्यायनेन

उपपन्नो गुणैः सर्वैः पुत्रो यस्य हि दत्रिमः ।
स हरेतैव तद्रिक्थं संप्राप्तोऽप्यन्यगोत्रतः ॥

इति मनुवचनैकवाक्यत्वात् । गुणैः—जातिविद्याविचारैः ।

च यस्तृतीयांशग्रहणविधिरुक्तः सोऽप्यत्युत्कृष्टगुणकदत्तकपरत्वेन व्याख्येयः । औरसोत्पत्त्यनन्तरं दत्तकोऽत्युत्कटगुणकश्चेत्तृतीयांशं लभतामन्यथा तु चतुर्थांशमिति तृतीयांशचतुर्थांशयोर्विरोधः परिहरणीय इत्यर्थः । एवं सगुणपरत्वेन तृतीयांशव्यवस्थापने प्रमाणं दर्शयन्नाह—उपपन्न इति ( म० स्मृ० ९ । १४१ ) । अस्य कल्लूकभट्टकृता व्याख्या त्वित्थम्—' पुत्रा रिक्थहराः पितुः ' ( म० स्मृ० ९ । १८५ ) इति द्वादशपुत्राणामेव रिक्थहरत्वं वक्ष्यति । ' दशापरे तु क्रमशः ' ( म० स्मृ० ९ । १६५ ) इत्यौरसक्षेत्रजाभावे दत्तकस्य पितू रिक्थहरत्वं प्राप्तमेव । अतः सत्यप्यौरसपुत्रे दत्तकस्य सर्वगुणोपपन्नस्य पितूरिक्थभागप्राप्त्यर्थमिदं वचनम् । यस्य दत्तकः पुत्रोऽध्ययनादिसर्वगुणोपपन्नो भवति सोऽन्यगोत्रादागतोऽपि सत्यप्यौरसे पितूरिक्थभागं गृह्णीयात् । गुणैरित्यस्य जाति—विद्या—आचारैरित्यर्थो बोध्यः । अत्र ' एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः ' ( म० स्मृ० ९ । १६३ ) इत्यौरसस्य सर्वोत्कर्षाभिधानात्तेन नास्य समभागित्वं किंतु क्षेत्रजोक्तषष्ठभागित्वमेव न्याय्यमिति । दत्तकचन्द्रिकाकारस्तु तृतीयांशभागित्वं मन्यत इति विशेषः । एवं चैतन्मनुवचनेन सह तृतीयांशविधायकदेवलकात्यायनवचनयोरेकवाक्यता भवतीति लाघवं संपद्यते । अन्यथा मूलभूतश्रुतिद्वयकल्पनापत्त्या गौरवं स्यादित्याशयः ।

दत्तकमीमांसाकारस्त्वर्धांशभागित्वमाह । दत्तपुत्रे यथाजाते कदाचित्स्वौरसो भवेत् । पितुर्वित्तस्य सर्वस्य भवेतां समभागिनौ । इति वृद्धगौतमीयात् । अत्रेदमाभाति । दत्तकग्रहणानन्तरमौरसोत्पत्तौ सत्यां सर्वगुणोपपन्नस्य दत्तकस्य षष्ठांशभागित्वं यत्कुल्लूकभट्टेनोक्तं तदनुपपन्नमिवेति । वृद्धगौतमोक्तसमांशभागित्वस्य कात्यायनोक्ततृतीयांशभागित्वस्य वसिष्ठोक्तचतुर्थांशभागित्वस्य च विरोधात् । किंच ' स हरेतैव तद्रिक्थम् ' इति विशेषानुपादानेन तद्रिक्थग्रहणस्याभिहितत्वेन समग्ररिक्थहरणप्राप्तावप्यौरसे सति समग्रतद्रिक्थहरणस्यान्याय्यत्वेन समानांशस्यैव तद्रिक्थहरणस्य प्रतीतेश्च । यदि च सर्वगुणोपपन्नस्यापि दत्तकस्य षष्ठांशभागित्वं न्याय्यं स्यात्तर्हि समार्धांशभागित्वं वृद्धगौतमाद्युक्तं कस्य न्याय्यं भवेत् । साधारणगुणयुक्तस्य निर्गुणस्य वा ? अत एवं व्याख्येयम्—अत्र दत्तकस्य सर्वगुणोपपन्नत्वविशेषणात्परीक्षोपविष्टयोर्द्वयोर्मध्येऽद्युत्तीर्णे इत्येकस्योत्तीर्णतायां निर्वेद्धितायामपरविषये वचनानु-

समग्रधनभोक्ता स्यादौरसोऽपि जघन्यजः ।
त्रिभागं क्षेत्रजो भुङ्क्ते चतुर्थं पुत्रिकासुतः ॥

इति ब्रह्मपुराणदर्शनात् । क्षेत्रजविषय इत्यन्ये ।

तथा केनापि मुनिना दत्तकस्य बन्धुदायादत्वमन्येन चादायादत्वमुक्तं, तद्गुणवदगुणवद्भेदेन समाधेयम् । पितुरिव बन्धूनां सपिण्डानामपि दायहरत्वाद्बन्धुदायादत्वं पितृमात्रदायहरत्वादबन्धुदायादत्वम् । तेषां षड् बन्धुदायादाः पूर्वेऽन्ये पितुरेव षाडित्यत्र पितुरेवेत्येवकारश्रवणात् ।

---

पादानादपरस्यानुत्तीर्णताप्रतीतिवदौरसस्य निर्गुणत्वप्रतीतेरौरसस्य निर्गुणत्वे सर्वगुणसंपन्नस्य दत्तकस्यार्धांशभागित्वं किंचिन्न्यूनगुणस्य तु तृतीयांशभागित्वं साधारणगुणयुक्तस्य च चतुर्थांशभागित्वं तदपेक्षयाऽपिन्न्यूनसाधारणगुणस्य षष्ठांशभागित्वमिति । अर्थान्निर्गुणस्य दत्तकस्यौरसत्त्वे नेषदप्यंशभागित्वं किंतु ग्रासाच्छादनभागित्वम् । शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम् ( म० स्मृ० ९ । १६३ )। इत्युक्तेः । पतितो ह्यददद्भवेत् ( म० स्मृ० ९ । २०२ ) इति दोषश्रवणात् । एवं सति वृद्धगौतमादिभिरेकवाक्यतालाभाल्लाघवं भवतीति भावः ।

अत्र केचिद्देवलकात्यायनोक्ततृतीयांशविधानस्य क्षेत्रजपुत्रविषयत्वं प्राहुः । ब्रह्मपुराणवचने तथा दर्शनादित्याह—समग्रधनभोक्तेति । जघन्यजोऽसवर्णोऽप्यौरसः समग्रधनभागी स्यात् । अथ च क्षेत्रजः पुत्रस्तृतीयांशं लभते । पुत्रिकापुत्रस्तु चतुर्थांशं प्राप्नोतीति तदर्थः । तथा च ब्रह्मपुराणवचनेन सह देवलकात्यायनोक्तवचनस्यैकवाक्यता लभ्यत इत्याशयः ।

अथ दत्तकस्य केनचिन्मुनिना मनुप्रभृतिना बन्धुदायादत्वमन्येन देवलादिना चादायादत्वं प्रतिपादितं तत्सगुणनिर्गुणभेदेन व्यवस्थापयितव्यम् । दत्तकस्य गुणवत्त्वे बन्धुदायादत्वमगुणत्वे तु दायादत्वाभाव इत्यर्थः । येन येन मुनिना येन क्रमेण द्वादश पुत्रा उक्तास्तेषां मध्ये प्रथमे षड् बन्धुदायादाः, उत्तरे च षडबन्धुदायादा भवन्तीति तत्र बन्धुदायादशब्दार्थं निर्वक्ति—पितुरिवेत्यादिना । यः पुत्रः पितुर्धनं यथाऽऽदत्ते तथा तद्बन्धूनां सपिण्डसमानोदकानामप्यनन्तराभावे दायमादत्ते स बन्धुदायादशब्देनोच्यते । यस्तु पुत्रः केवलं पितुरेव दायमादत्ते न तद्बन्धूनां सपिण्डादीनां सोऽबन्धुदायाद उच्यत इत्यर्थः । 'तेषां षड् बन्धुदायादाः पूर्वेऽन्ये पितुरेव षट्' इति देवलवचने पितुरेवेत्येवकारश्रवणादबन्धुदायादबन्धुदायादशब्दयोस्तथार्थस्य निश्चयादिति भावः । 'पुत्रान् द्वादश०' ( म० स्मृ० ९ । १५८ ) इति मनुवचनव्याख्यावसरे सर्वज्ञनारायणेन बन्धुदायादाबन्धुदायादशब्दयो-

एवं दत्तकस्य धनग्रहणादौ मुनिभेदेन पूर्वापरोक्तिवैषम्यं गुणागुणविवेकेनापास्तम् । एतेनौरसस्य भ्रात्रादिधने येनैव भ्रातृत्वादिना संबन्धेनाधिकारित्वं तादृशेनैव संबन्धेन तादृशदत्तकस्यापि यथासंभवमुचितांशभागित्वमवधेयम् । एवं धनिनः पुत्रान्तरसत्त्वे मृतपितृकस्य दत्तकपौत्रस्यापि दत्तोचितांशभागित्वं तदसत्त्वे सर्वहरत्वमपीति ।

न च पौत्रस्य स्वपितृयोग्यांशभागित्वनियमाद्दत्तकस्य ग्रहीतुः पितामहैर-

---

त्ययमेवार्थः स्पष्टमेवाभिहितः । एवमेव दत्तकस्य रिक्थग्रहणाधिकारविषये मुनिभेदेन पूर्वापरोक्तिवैषम्यं दृश्यते । तदपि सगुणनिर्गुणपरत्वेन परिह्रियताम् । दत्तकस्य सगुणत्वे धनग्रहणाद्यधिकारित्वं, दत्तकस्य निर्गुणत्वे तु धनग्रहणाद्यनधिकारित्वमेवं व्याख्यानेन परिहरणीयमित्यर्थः । द्वादशपुत्राणां मध्ये पूर्वषट्के यो दत्तकपाठः स सगुणदत्तकाभिप्रायेण, उत्तरषट्के च यो दत्तकपाठः स निर्गुणदत्तकाभिप्रायेणेति यावत् । दत्तकस्य बन्धुदायादत्वप्रतिपादनेन यत्सिद्धं तत्पिण्डीकृत्य दर्शयति—**एतेनेति** । सगुणदत्तकस्य परिग्रहीतृपितुरिव तद्बन्धूनामपि दायहरत्वेनेत्यर्थः । अयं भावः—यथौरसः स्वभ्रात्रादीनां पुत्रपत्न्याद्यभावे यादृशभ्रातृत्वादिसंबन्धेन तद्धनाधिकारी भवति तथा तादृशभ्रातृत्वादिसंबन्धेनैव सगुणदत्तकोऽपि यथासंभवं तद्धनाधिकारी भवतीत्यवगतव्यम् ।

एवं कस्यचिद्धनिनः पुरुषस्य द्वितीये पुत्र औरसे विद्यमाने प्रथमेन पुत्रेण गृहीतस्य दत्तकस्यार्थाद्धनिनो दत्तकपौत्रस्यापि प्रतिग्रहीतृमरणानन्तरं दत्तकोचितचतुर्थादिद्रव्यांशग्राहित्वं भवति । धनिनः पितामहस्य द्रव्याच्चतुर्थांशो मिलति नतु पितृव्यतुल्यांश इत्यर्थः । पितामहस्य पुत्रान्तरेऽविद्यमाने त्वयं दत्तकपौत्रः पितामहस्य समग्रं धनं हरति । दत्तकपौत्र इत्यत्र दत्तकश्चासौ पौत्रश्चेति विग्रहः । अत्रोदाहरणम्—देवदत्तः कश्चिद्धनी । तस्य चैत्रमैत्रनामानौ द्वौ पुत्रावौरसावास्ताम् । तत्र चैत्रेण स्वीयापुत्रतानिवारणेन दत्तको गृहीतः । ततः कियता कालेन चैत्रः स्मृतिपथं गतः । अतो विभागकाले समुपस्थिते दत्तकपौत्रः पितामहधनाद्दत्तकोचितं चतुर्थांशं लभते नतु स्वपितृव्यमैत्रतुल्यं समांशं लभते । यदि तु स्वपितामहस्य देवदत्तस्य मैत्रनामकं पुत्रान्तरं नाऽऽसिष्ट चेत्तदाऽयं दत्तकपौत्रः पितामहस्वामिकस्य सर्वधनस्य भागी जातः स्यादिति ।

दत्तकपौत्रस्य दत्तकोचितांशभाक्त्वमुक्तं तत्र शङ्कते—**न च पौत्रस्येति** । अयं भावः—स्वप्रतिग्रहीतृपितुर्यावान् द्रव्यांशो लब्धुं योग्यस्तावान् धनांशः पौत्रस्य पितामहधनाल्लब्धुं योग्य इत्येवं नियमो लोके दृश्यते । ततश्च स्वप्रतिग्रहीतृपितुः

सत्त्वे तादृशपितृव्यतुल्यस्यैवांशस्य वद्धांग्यत्वाद्दत्तकपौत्रः पितृव्यतुल्यमेवांशं लभतामिति वाच्यम् । पुत्रस्य दत्तकत्वे चतुर्थांशः पौत्रस्य तु तथात्वे समानांश इति वैषम्यात् । ततश्च स्वसमानरूपस्य पितुर्यादृशांशः शास्त्रसिद्धस्तस्यैव स्वपितुर्योग्यांशतेति यथोक्तमेव साधु । एवं रीतिः प्रपौत्रेऽप्यनुसर्तव्येति ।

---

स्वपितामहनिरूपितौरसत्वसत्त्वेन दत्तकपौत्रः ( चैत्रस्य दत्तकपुत्रः ) स्वपितृव्यमैत्रतुल्यं समांशं लभतामिति । यथा स्वपितामहस्यैक एवौरसश्चेत्सर्वधनभागी स्वपितेति स्वस्यापि सर्वांशभागित्वम् । द्वितीयश्चेदौरसपुत्रस्तदा समांशभागी स्वपितेति कृत्वा स्वस्यापि समांशभागित्वम् । अत्र सर्वत्र स्वशब्देन दत्तकपौत्रो विवक्षित इति लक्षणसमन्वय ऊहनीयः । एवं च प्रकृतस्थले स्वपितामहस्यौरसपुत्रद्वयवत्त्वात्स्वप्रतिग्रहीतृपितुः समांशभागित्वेन स्वेनापि समांशभागिना भवितव्यमिति शङ्कितुराशयः । इति चेदेतदयुक्तमित्याह— पुत्रस्य दत्तकत्वे इत्यादि । अयं भावः—यदा च देवदत्तेन स्वीयापुत्रतामवलोक्य दत्तकः स्वीकृतः । पश्चात्कियताऽपि कालेन देवद्विजप्रसादाद्देवदत्तस्यौरसः पुत्रः संजातः । तादृशस्थले देवदत्तीयप्राथमिकपुत्रस्य दत्तकत्वेन तादृशदत्तकपुत्रस्य चतुर्थांशभागित्वम् च देवदत्तस्यौरसः पुत्रश्चैत्रस्तेन गृहीतो दत्तकपुत्रः, एतादृशस्थले चैत्रपुत्रस्य देवदत्तपौत्रस्य दत्तकत्वेन तादृशपौत्रस्य स्वपितृव्यमैत्रतुल्यसमांशभागित्वमित्येवं वैषम्यस्यानिवार्यत्वात् । अतः स्वेन दत्तकेनौरसेन वा पुत्रेण समानरूपस्य दत्तकस्यौरसस्य वा पितुर्यावानंशलाभः शास्त्रसिद्धस्तावतोंऽशस्यैव स्वपितुर्योग्यांशतेति पौत्रस्य स्वसमानपितृयोग्यांशभागित्वमित्येवं नियमः सिध्यति । स्वं पौत्रस्तेन समानो यः पिता तादृशपितुर्लब्धुं योग्यो योंऽशस्तद्भागित्वं पौत्रस्येत्यर्थः । अत्र समानत्वं दत्तकत्वेनौरसत्वेन वा बोध्यम् । यथा पौत्रो दत्तकश्चेत्प्रतिग्रहीता तत्पिताऽपि दत्तकः स्यात् । यदि च पौत्र औरसश्चेत्तत्पित्राऽप्यौरसेन भाव्यमिति । एवं च यत्र पौत्रतत्पित्रोर्दत्तकत्वेनौरसत्वेन वा समानरूपत्वं तत्र पौत्रस्य स्वपितृयोग्यांशभागित्वनियम इति यावत् । प्रकृतस्थले तु पौत्रो दत्तकस्तत्पिता त्वौरस इत्येवं पौत्रतत्पित्रोः समानरूपत्वाभावेन पौत्रस्य दत्तकस्य स्वपितामहीयधनाद्दत्तकोचितचतुर्थांशभागित्वमेव न्याय्यं न तु स्वपितृव्यमैत्रतुल्यसमांशभागित्वमिति भावः । यद्ययं पौत्र औरसः स्यात्तदा समांशभागीति ज्ञेयम् ।

सोऽयं न्यायः प्रपौत्रविषयेऽप्यनुसरणीय इत्याह— एवं रीतिरिति । देवदत्तः कश्चिद्धनी पुरुषः । तस्य चैत्रमैत्रनामानौ द्वावौरसौ । तयोर्मध्ये मैत्रस्य न संततिः । चैत्रस्य त्वौरसः पुत्रो विष्णुः । तेन विष्णुना स्वस्यापुत्रतामवधार्य दत्तकः पुत्रः स्वीकृतः । सोऽयं देवदत्तस्य दत्तकप्रपौत्रः । तस्यास्य प्रपौत्रस्य पितृपितामहौ

ननु क्षेत्रजदत्तकादीनां सामान्यधनाधिकारित्वेऽपि राज्येऽनाधिकारः श्रूयते । यथा—

औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च ।
गूढोत्पन्नोऽपविद्धश्च भागार्हास्तनया इमे ॥
कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा ।
स्वयंदत्तश्च दासश्च षडिमे पुत्रपांशुलाः ॥
अभावे पूर्वपूर्वेषां परान्समभिषेचयेत् ।
पौनर्भवं स्वयंदत्तं दासं राज्ये न योजयेत् ॥

तथा—न क्षेत्रजादींस्तनयान्राजा राज्येऽभिषेचयेत् ।
पितॄणां साधयेन्नित्यमौरसे तनये सति ॥ इति ।

उच्यते—शास्त्रान्तरसद्भावे विशेषशास्त्रस्य सामान्यपरत्वमेव । लाघवात् । अत

---

कालवशात्परलोकवासिनो संजातौ । ततो विभागकाले समुपस्थितेऽयं दत्तकप्रपौत्रः स्वप्रपितामहस्वामिकधनाद्दत्तकोचितचतुर्थांशमेव लभते न तु स्वप्रपितामहस्यौरसपुत्रान्तरेण मैत्रेण सह समांशं लभते । पौत्रविषयकपूर्वोक्तन्यायादित्यर्थः । यदि चायं प्रपौत्रः स्वपितृपितामहवदौरसः स्यात्तर्हि समांशभागीति भावः ।

शङ्कते—नन्विति । निरुक्तप्रकारेण क्षेत्रजदत्तकादिपुत्राणां सामान्यधनाधिकारित्वे सिद्धेऽपि राज्ये ( विशेषधने ) अनधिकारित्वं स्मर्यत इत्याह—**औरसः क्षेत्रजश्चैवेत्यादि** 'औरसे तनये सति' इत्यन्तम् । अस्यार्थः—औरसः, क्षेत्रजः, दत्तकः, कृत्रिमः, गूढोत्पन्नः, अपविद्धश्चेति षट् तनया भागार्हा अंशभाज इत्यर्थः । कानीनः, सहोढः, क्रीतः, पौनर्भवः, स्वयंदत्तः, दासश्चेति षट् पुत्रपांशुला निन्दित पुत्राः । पांशुं पापं लान्ति गृह्णन्तीति व्युत्पत्त्या तथार्थावगमादिति भावः । पांसुला इति पाठेऽपि स एवार्थः । एतेषां मध्ये पूर्वस्य पूर्वस्याभावे सति परं परमग्रिममग्रिमं राज्येऽभिषेचयेत्, राज्याभिषेकं कुर्यादित्यर्थः । परः परोऽधिकारीति यावत् । परंतु पौनर्भवस्वयंदत्तदासाख्यान् राज्ये कथमपि नैवाभिषेचयेत । **न क्षेत्रजादीनिति** । सत्यौरसपुत्रे क्षेत्रजादीन् गौणपुत्रान् राज्ये नैवाभिषेचयेत् । पितॄणां नित्यं श्राद्धादि च न साधयेन्न कारयेदिति । तथा च क्षेत्रजदत्तकादीनां सापेक्षं राज्यानधिकारित्वं पौनर्भवादित्रयाणां तु निरपेक्षं तदिति विशेषेऽपि पूर्वपूर्वसत्त्वे दत्तकादीनां राज्यानधिकारित्वं श्रूयत इति शङ्ककाशयः ।

अत्रोत्तरमुच्यते—**शास्त्रान्तरेति** । 'अभावे पूर्वपूर्वेषाम्०' एतद्वचनान्तरानु-

एव पूर्वपूर्वाभावे परपराधिकारबोधकं । हि पूर्ववाक्यं प्रागुक्तनारदादिवचनैकवा-
क्यतया समग्रराज्यमेव विषयी करोति। परवचनं च सत्यौरसे क्षेत्रजदत्तकादीनां

सारेण 'न क्षेत्रजादींस्तनयान्०' इति विशेषार्थकवचनस्य लाघवानुरोधेन सामा-
न्यार्थकत्वं ग्रहीतव्यं भवति । तथा चौरसे तनये सति क्षेत्रजादीनां राज्ये
नियोजनं न कर्तव्यमित्यस्यार्धराज्यं न देयं, किंतु 'तृतीयांशहराः स्मृताः,
'चतुर्थभागभागी स्यात्, षष्ठं तु क्षेत्रजस्यांशं' ( म० स्मृ० ९ । १६३ )
इत्यादिवचनप्राप्तोचिततृतीयचतुर्थाद्यंशा देया इत्यत्र तात्पर्यं मन्तव्यम् । तथा
च चतुर्थाद्यंशविधायकवाक्यैः सह प्रकृतवचनस्यैकवाक्यता जायत इति लाघवं
भवति । अन्यथा वाक्यभेद इति गौरवं दुर्निवारमिति भावः । तेन 'अभावे
पूर्वपूर्वेषां परान् समभिषेचयेत्' इत्यस्य पूर्वपूर्वाभावे परस्य परस्य समग्रं राज्यं
दातव्यमित्यर्थः पर्यवस्यति । यथा कात्यायनवसिष्ठाभ्यामौरसोत्पत्त्यनन्तरं पूर्वगृही-
तस्य दत्तकादेस्तृतीयचतुर्थांशाः प्रदातव्यत्वेनोक्ताः । अत एव नारदादिवचनेष्वौ-
रसाद्यभावे क्षेत्रजदत्तकादीनां प्रोक्तो यो रिक्थग्रहणविधिः स समग्ररिक्थग्रहणवि-
धित्वेन पर्यवस्यति तद्वदयं 'अभावे पूर्वपूर्वेषाम्' इति परस्य परस्य राज्याभि-
षेकविधिः समग्रराज्यदानपरत्वेन पर्यवस्यतीत्यर्थः । ततश्च 'अभावे पूर्वपूर्वेषां०'
इति वचनस्य 'ज्यायसा ज्यायसोऽभावे जघन्यो यो य आप्नुयात्' इति नार-
दादिवचनेन सहैकवाक्यत्वाल्लाघवं भवति । तदेतदुक्तम्—**अत एव पूर्वपूर्वाभावे
इत्यादि विषयी करोतीत्यन्तम्** । अत एव—अभावे पूर्वपूर्वेषामिति शास्त्रान्तरस-
द्भावेन 'क्षेत्रजादीन्' इति विशेषशास्त्रस्य 'तत्तदुचितांशा देयाः' इत्येवं
सामान्यार्थपरत्वाभ्युपगमादेवेत्यर्थः । **पूर्ववाक्यमिति** । अभावे पूर्वपूर्वेषामिति वाक्य-
मित्यर्थः । **प्रागुक्तनारदादिवचनेति** । 'ज्यायसो ज्यायसोऽभावे जघन्यो यो य
आप्नुयात्' इत्यादिवचनैकवाक्यतयेत्यर्थः । **समग्रराज्यमेवेति** । नारदादिवाक्यं यथा
समग्ररिक्थग्रहणं विषयी करोति तद्वदभावे पूर्वपूर्वेषामिति वचनं समग्रं राज्यमेव विष-
यी करोतीत्यर्थः ।

ननु यदि शास्त्रान्तरवशाल्लाघवानुरोधेन विशेषशास्त्रस्य सामान्यार्थपरत्वमभ्युपे-
यते तर्हि विशेषशास्त्रं माऽस्त्वेव । सामान्यार्थस्य तृतीयांशहराः स्मृताः, चतुर्थभागभागी
स्यादित्यादिसामान्यवचनैरेव प्राप्तत्वादित्यत आह—**परवचनं चेति** । 'न क्षेत्र-
जादींस्तनयान् राजा राज्येऽभिषेचयेत्' इत्याद्यग्रिमं वचनं चौरसे सति क्षेत्र-
जदत्तकादीनां समांशोऽर्धराज्यं न देयमिति निषेधं बोधयति । यत्त औरसाद्यभावे
'अभावे पूर्वपूर्वेषाम्०' इति पूर्ववाक्येन नारदाद्येकवाक्यतयोत्तरेषां समग्रराज्य-

समानांशनिषेधकमसवर्णक्षेत्रजदत्तकादिविषयं वा । अन्यथा वाक्यभेदेन गौरवम् । तत्स्वीकारेऽपि नानेन वचनेन क्षेत्रजदत्तकादीनां सत्यौरसे स्वस्वोचितांशो निषिध्यते । किंत्वौरससत्त्वे तेषामभिषेकं निषिध्यौरसस्य राज्येऽभिषेको विधीयते ।

---

भागित्वमभिहितं ततः सत्यौरसेऽर्धांशहरत्वमुन्नितत्वात्प्राप्तं तदनेन निषिध्यत इति युक्तमस्य समानांशनिषेधकत्वम् । यदि च न क्षेत्रजादीनित्यनेन सर्वथा राज्यसंबन्धो निषिध्येत तदौरसाभावे समग्रराज्यभागित्वमथ चौरसे सति सहसैवात्यन्तं राज्यसंबन्धाभाव इति वैषम्यमन्याय्यं स्यादिति भावः । अथ न क्षेत्रजादींस्तनयानित्यस्याक्षरमर्यादयौरसे सति सर्वथा राज्यसंबन्धनिषेध एव विधित्सितो न समानांशनिषेध इत्याग्रहे त्वाह—असवर्णक्षेत्रजेति । असवर्णा ये क्षेत्रजदत्तकादयस्तद्विषयकत्वेनायं सर्वथा राज्यसंबन्धनिषेधो व्याख्येयः । बीजार्थं 'ब्राह्मणः कश्चिद्धनेनोपनिमन्त्र्यताम्' इति वचनाद्ब्राह्मणेन नियोगविधिना क्षत्रियायामुत्पादितः क्षेत्रजोऽसवर्णः । असवर्णो दत्तकादिर्यद्यपि 'जातिष्वेव न चान्यतः' इति नियमाद्वक्तुमशक्यस्तथाऽपि 'सजातीयः सुतो ग्राह्यः पिण्डदाता स रिक्थभाक् । तदभावे विजातीयो वंशमात्रकरः स्मृतः' इति वृद्धयाज्ञवल्क्यवचनात् 'जातिष्वेव न चान्यतः' इति नियमः सजातीयसंभवे विजातीयनिषेधार्थ इति दत्तकचन्द्रिकाकारेणोक्तत्वाच्च तत्संभवो बोध्यः । तथा च 'यदि स्यादन्यजातीयो गृहीतोऽपि सुतः क्वचित् । अंशभाजं न तं कुर्याच्छौनकस्य मतं हि तत्' इति वचनात्समानांशनिषेधकत्वं युक्तं न क्षेत्रजादीनित्यस्येति भावः । अन्यथेति । उक्तवैपरीत्ये । न क्षेत्रजादीनित्यस्य सवर्णक्षेत्रजादिविषयकत्वेऽङ्गीक्रियमाण इत्यर्थः । गौरवमिति । सत्यौरसे तनये क्षेत्रजादयो राज्यांशं न लभन्ते राज्यातिरिक्तधनांशं तु लभन्त इत्यर्थभेदाद्वाक्यभेदरूपं गौरवं स्यादिति भावः । ननु न क्षेत्रजादीनित्यस्य विशेषवचनत्वे प्रधानमल्लनिबर्हणन्यायेन क्षेत्रजदत्तकादीनां महतो राज्यांशस्य निषेधेन तदपेक्षया न्यूनस्य चतुर्थांशस्यापि निषेधात्कुतः पूर्वोक्तं वाक्यभेदरूपं गौरवमित्याशङ्कयाऽऽह— तत्स्वीकारेऽपीति । न क्षेत्रजादीनित्यस्य विशेषशास्त्रत्वस्वीकारेऽपीत्यर्थः । नानेनेति । न क्षेत्रजादीनिति वचनेनौरसे तनये सति क्षेत्रजदत्तकादीनां स्वस्वोचितः षष्ठं तु क्षेत्रजस्येत्यादिपूर्वोक्तसामान्यशास्त्रप्राप्तः षष्ठादंशो न निषिध्यते । अपि त्वौरसे सति क्षेत्रजदत्तकादीनां राज्याभिषेकं निराकृत्यौरसस्य राज्याभिषेकः करणीय इति प्रतिपाद्यते । तद्वचने राजा राज्येऽभिषेचयेदिति राज्याभिषेकस्य श्रूयमाणत्वेन राज्याभिषेकमात्रस्यैव निषेधः स्यान्न

तथा च—क्षेत्रजदत्तकादयः सामान्यशास्त्रप्राप्तमंशं लभन्त एव। तत्संकोचाभावात्। न चैतदेव वचनं बाधकम्। भिन्नविषयत्वात्। अत एव भागार्हास्तनया इम इत्यनेन पूर्ववचने भागार्हत्वं स्पष्टीकृतम्। राज्यातिरिक्तस्य भाग इति न शक्यते वक्तुम्। राज्यस्यैव तत्रोपस्थितत्वात्। पौनर्भवादीनां तु पूर्वपूर्वाभावेऽपि

त्वंशरयेति हृदयम्। यदि तु राज्यांशो निषिध्येत तर्हि चतुर्थाद्यंशा अपि निषिद्धाः स्युर्न पुनस्तथाऽस्ति। तथा च प्रधानमल्लनिबर्हणदृष्टान्तप्रदर्शनमस्थान इत्याकूतम्। तस्मात्क्षेत्रजदत्तकादयो गौणपुत्रा अपि सामान्यशास्त्रविहितं स्वस्वोचितमंशं राज्याल्लब्धुमर्हन्त्येव। सामान्यशास्त्रसंकोचे प्रमाणाभावात्।

ननु न हिंस्यात्सर्वा भूतानीति सामान्यशास्त्रस्य संकोचे यथा 'अग्नीषोमीयं पशुमालभेत' इति विशेषवचनं प्रमाणं तद्वत्प्रकृतस्थले न क्षेत्रजादीनिति विशेषवचनमेव सामान्यशास्त्रसंकोचे प्रमाणमस्त्वित्याशङ्क्याऽऽह—भिन्नविषयत्वादिति। न क्षेत्रजादीनित्यत्र राज्येऽभिषेचयेदिति राज्याभिषेको निषिध्यत इति तस्मादंशनिषेधाप्रतीतिः। सामान्यशास्त्रात्त्वंशविधेः प्रतीतिः। इत्येवं भिन्नविषयत्वमित्यर्थः। यदि तु न क्षेत्रजादीनित्यस्मात् 'क्षेत्रजादींस्तनयान् राजा राज्यांशं न दद्यात्' इत्येवमंशनिषेधप्रतीतिः स्यात्तदा न क्षेत्रजादीनिति वचनं सामान्यशास्त्रप्राप्तांशस्य बाधकं स्यादिति भावः। विशेषशास्त्रेणाभिषेको निषिध्यते सामान्यशास्त्रेण त्वंशो विधीयत इति द्वयोर्भिन्नविषयत्वान्न बाध्यबाधकभावः। उद्देश्यतावच्छेदकधर्मयोः सामान्यविशेषभावस्यैव बाध्यबाधकभावप्रयोजकत्वादिति तात्पर्यम्। अत एवेति। विषयभेदेन बाध्यबाधकत्वाभावादेवेत्यर्थः। भागार्हास्तनया इमे, इति पूर्ववचनेन क्षेत्रजदत्तकादीनां भागार्हत्वं स्पष्टमेवोक्तम्। संगच्छत इति शेषः।

ननु पूर्ववचनेन क्षेत्रजादीनां यद्भागार्हत्वं कण्ठरवेणोक्तं तद्राज्यातिरिक्तसामान्यधनोद्देशेनेत्याशङ्क्याऽऽह—राज्यस्यैवेति। प्रकरणात्तत्र राज्यस्यैव संबन्धेन तदेवोद्दिश्य भागार्हत्वमभिहितं न सामान्यधनोद्देशेनेति भावः। पूर्वस्य पूर्वस्याभावेऽपि पौनर्भवस्वयंदत्तदासानां तु पृथग्वचनसामर्थ्याद्राज्ये नियोजनं नैव करणीयम्। यदि तु पूर्वपूर्वसत्त्वे पौनर्भवादीनां राज्यनियोजननिषेधकं 'पौनर्भवं स्वयंदत्तं दासं राज्ये न योजयेत्' इति वचनं स्यात्तर्हि तन्निरर्थकमेव स्यात्। तादृशार्थस्य न क्षेत्रजादीनित्यनेनैव सिद्धत्वात्। तदेतदुक्तं—वचनसामर्थ्यादिति। एवं औरसे सत्यपि क्षेत्रजादयः पुत्राः स्वस्वोचितं राज्यांशं प्राप्नुवन्त्येव। राज्यप्राप्तिस्त्वौरसस्यैव। औरसाभावे क्रमेण राज्यमपि प्राप्नुवन्ति। किंतु पौनर्भवादयस्त्रयो न कथमपि राज्यं प्राप्नुवन्तीति सिद्धम्।

राज्यनियोजनाभावः पृथगभिधानसामर्थ्यादिति ।

एतावता प्रबन्धेनाभिहितोऽयं क्षेत्रजदत्तकादीनामौरसेन सह विभागप्रकारः स तु शूद्रस्य न संभवति । तस्य तु—

दास्यां वा दासदास्यां वा यः शूद्रस्य सुतो भवेत् ।
सोऽनुज्ञातो हरेदंशमिति धर्मो व्यवस्थितः ॥

इति मनुवचनेन

जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत् ।

---

एतावता प्रघट्टकेनोक्तो योऽयमौरसेन सह क्षेत्रजदत्तकादीनां चतुर्थांशरूपो विभागप्रकारः स शूद्रस्य नास्ति । वैषम्यापादकत्वादित्याह—एतावतेति । तस्य तु कथं विभागप्रकार इत्यपेक्षायामाह—दास्यां वेति ( म० स्मृ० ९ । १७९ )। 'ध्वजाहृतो भक्तदासो०' ( म० स्मृ० ८ । ४१५ ) इत्यादिना ध्वजाहृतत्वादीनि सप्त दासत्वकारणान्युक्तानि । तादृशलक्षणाक्रान्तायां दास्यां, अथवा तादृशलक्षणाक्रान्तेन दासेनोढा साऽपि दासी । दासेनोढा त्वदासी या साऽपि दासीत्वमाप्नुयादिति वचनात । तादृश्यां दासदास्यां वेत्यर्थः । अथवा शूद्रेणापरिणीता शूद्रा दासी । शूद्रस्य यो दासस्तत्संबन्धिनी दासी दासदासी । द्विविधायां दास्यां शूद्रेणोत्पादितः, तथा दासदास्यां प्रधानशूद्रेणोत्पादितः सुतः स पित्रा 'परिणीतापुत्रैः समांशभागी भवान् भवतु' इत्यनुज्ञातोऽंशं लभत इति शास्त्रव्यवस्था नियतेति तस्यार्थः । अत्रांशं हरेदिति सामान्यतः श्रवणादंशे सिद्धे किं समोंऽश उत विषम इति जिज्ञासायां समोंऽश इति ज्ञेयम् । तदुक्तं जैमिनीये—समं स्यादश्रुतत्वात् ( जै० सू० १० । ३ । ५२ ) इति । ज्योतिष्टोमे सर्वेषामृत्विजां गवां द्वादशाधिकं शतं दक्षिणात्वेन यजमानेनामुष्मा एतावदमुष्मा एतावदिति विभजनीयमित्युक्त्वा समविभागार्थं प्रकृतसूत्रमुपन्यस्तम् । स विभागः समः स्यात । कुतः । अश्रुतत्वात् । वैषम्यहेतोर्विशेषस्याश्रवणादिति तदर्थादित्यर्थः ।

'जातोऽपि दास्यामिति' ( या० स्मृ० २ । १३३, १३४ ) । शूद्रजातीयपुरुषेण दास्यामुत्पादितोऽपि पुत्रः पितुरिच्छया भागं लभते । पितुर्मरणादूर्ध्वं तु यदि परिणीतापुत्राः सन्ति तदा ते भ्रातरस्तं दासीपुत्रमर्धभागिनं कुर्युः । स्वभागादर्धं तृतीयांशं दद्युरित्यर्थः । अथ परिणीतापुत्रा न सन्ति तदा कृत्स्नं धनं दासीपुत्रो गृह्णीयाद्यदि परिणीतादुहितरस्तत्पुत्रा वा न सन्ति । परिणीतादुहितृदौहित्रस्य च सत्त्वे त्वर्धभागिक एव दासीपुत्रः । अत्र सामान्यतोंऽशशब्दोपा-

मृते पितरि कुर्युस्तं भ्रातरस्त्वर्धभागिनम् ॥
अभ्रातृको हरेत्सर्वं दुहितॄणां सुतादृते ।

इति याज्ञवल्क्यीयेन च दासीपुत्रस्याप्यौरसेन समांशाभिधानेन पितुरनन्तरं भ्रातृरहितस्य तस्यैव दौहित्रेण सह विभागदर्शनेन च दण्डापूपायितः सति पितरि क्षेत्रजदत्तकादीनामौरसेन समांशः, असति तु तदर्धांशः । अन्यथा यत्र च

---

दानेऽपि 'समं स्यादश्रुतत्वात्' ( जै० सू० १० । ३ । ५३ ) इति न्यायेन समांशो बोध्यः । कामत इत्युक्तेः पितरि विद्यमान इति गम्यते । अग्रे मृते पितरीत्युक्तेश्च । ततश्च पितरि विद्यमाने समांशस्य विधानान्मृते पितरि पुनः समांशविधानस्यायुक्तत्वेनार्धशब्दस्य समांशवाचिन एकस्य परिणीतापुत्रस्य यावानंशस्तदर्धप्रतिपादकत्वात्तृतीयांशपरत्वं पर्यवस्यतीत्यर्धभागिनमित्यस्य तृतीयांशभागिनमित्यर्थो बोध्यः । ततश्च कर्मधारयान्मत्वर्थे इनिः । अर्धभागिकमिति पाठे तु ठन् बोध्यः । अथवा भागस्यार्धमित्येकदेशिसमासोऽपि सुवचः । अत्र शूद्रग्रहणाद्द्विजातिना दास्यामुत्पन्नः पितुरिच्छयाऽप्यंशं न लभते नाप्यर्धं, दूरत एव कृत्स्नम् । किंत्वनुकूलश्चेज्जीवनमात्रं लभत इति तदर्थः । परिणीतायामुत्पन्नाः पुत्राः परिणीतापुत्राः । तथा परिणीतायामुत्पन्ना दुहितरः परिणीतादुहितरः । तत्पुत्राः परिणीतादुहितृपुत्रा दौहित्रा इत्यर्थः ।

उपर्युक्तेन मनुवचनेन याज्ञवल्क्यीयवचनेन च दासीपुत्रस्याप्यौरसेन सह समांशस्य विधानादथ च पितृमरणानन्तरं दासीपुत्रस्य पितृपरिणीतोत्पन्नभ्रात्रभावे दौहित्रेण सहार्धभागस्य दर्शनात्क्षेत्रजदत्तकादिपुत्राणां पितरि जीवति औरसेन समानांशः, असति तु पितरि तदर्धांश इति दण्डापूपन्यायेनैव सिद्धं भवति । दण्डापूपन्यायस्वरूपं त्वित्थम्—घृततैलादिपाचिता गोधूमादिचूर्णानां विकारा अपूपाः । पूपोऽपूपः पिष्टकः स्यात्, इति त्रिकाण्डीस्मरणात् । ते च पटखण्डे बद्ध्वा मार्गे पाथेयामिति बुद्ध्या पूर्वशर्वर्यां आद्यदण्डेऽवलम्बिताः । ततः श्वः प्रातर्ग्रामगमनसमये दण्डे गृहीते दण्डग्रहणप्रयत्नेनैव गृहीता दण्डावलम्बिनस्तेऽपि न तद्ग्रहणार्थं प्रयत्नान्तरमास्थेयं भवतीति तादृशानुमानं दण्डापूपन्याय इत्युच्यते । यद्वा-अपूपवन्तं दण्डमानयेत्यनुशिष्टो भृत्यः किंचिद्भक्षितं दण्डं दृष्ट्वा दण्डस्तु मूषकैर्भक्षित इत्यूचिवान् । तद्वाक्यादपूपास्तु सुतरां भक्षिता इति [illegible] ततो ज्ञायते तद्वन्मनुवचनाद्याज्ञवल्क्यवचनाच्च सति पितरि क्षेत्रजादीनां सम[illegible] [illegible] तु तृतीयांश इत्यनायासतो ज्ञायत इत्यर्थः ।

अन्यथेति । उक्तवैपरीत्ये । पितरि विद्यमाने क्षेत्रजादीनां समांशलाभोऽविद्य-

क्षेत्रजदत्तकादीनामौरसचतुर्थांशित्वं तत्र तदपेक्षयाऽत्यन्तविप्रकृष्टस्य दासीपुत्रस्यौरससमांशित्वमिति महद्वैषम्यं स्यात् ।

एवमसत्सु क्षेत्रजादिषु सत्योश्च पत्नीकन्ययोर्दौहित्राधिकारे क्लृप्ताधिकार-

---

माने तु पितरि तृतीयांशलाभ इत्यस्यानङ्गीकारेणाविशेषेण ब्राह्मणादिवच्चतुर्थांशस्यैव लाभ इति स्वीकार इत्यर्थः । पूर्वोक्तं वैषम्यं निरूपयति—यादृशे विषये दासीपुत्रापेक्षयाऽत्यन्तसंनिकृष्टानां क्षेत्रजदत्तकादीनामौरसेन सह चतुर्थांशग्रहणाधिकारित्वं तादृश एव विषये क्षेत्रजदत्तकाद्यपेक्षयाऽत्यन्तविप्रकृष्टस्यापि दासीपुत्रस्यौरसेन सह समांशग्रहणाधिकारित्वमिति महद्वैषम्यमापद्येतेति कृत्वा शूद्रविषये क्षेत्रजादीनामौरसेन सह चतुर्थांशाधिकारित्वमयुक्तमित्याह—यत्र च क्षेत्रजदत्तकेति । तथा च वैषम्यपरिहारार्थं क्षेत्रजदत्तकादीनां सति पित्यौरसेन सह समांशाधिकारित्वमसति तु तृतीयांशाधिकारित्वमित्येव कल्पनं न्याय्यमिति भावः ।

‘ दुहितॄणां सुताद्दते ’ इत्युक्तेर्दौहित्रासत्त्वे परिणीतोत्पन्नभ्रातृरहितस्य दासीपुत्रस्य कृत्स्नधनग्रहणं विधीयतेऽर्थाद्दौहित्रसत्त्वे दासीपुत्रस्य कृत्स्नधनग्रहणाधिकारो नास्तीति प्रतीयते । अपुत्रस्य धनग्रहणाधिकारिक्रमबोधके ‘ पत्नी दुहितरश्चैव ’ ( या० स्मृ० २ । १३५ ) इति याज्ञवल्क्यवचने तृतीयस्थाने दौहित्रः पठ्यते । तत्र चैवेति चशब्देन दुहित्रभावे दौहित्रो धनभागित्युक्तं मिताक्षरायां विज्ञानेश्वरेण । ततश्च तृतीयस्थानस्थितदौहित्रसत्त्वे यदि दासीपुत्रस्य कृत्स्नधनग्रहणाधिकारो नास्ति तर्हि तत्पूर्वयोः प्रथमद्वितीयस्थानपठितयोः पत्नीदुहित्रोः सत्त्वे दासीपुत्रस्य कृत्स्नधनग्रहणाधिकारो नास्तीति किमु वक्तव्यमिति कैमुतिकन्यायेनैव दासीपुत्रस्य कृत्स्नधनग्रहणानधिकारः सिध्यति । इतरथा क्षेत्रजादिपुत्रेष्वसत्सु भार्यादुहित्रोश्च सत्योर्यद्यपुत्रधनग्रहणाधिकारो दौहित्रस्य स्यात्तर्हि पत्नीदुहित्रोरपुत्रधनग्रहणाधिकारो याज्ञवल्क्योक्तो बाधितः स्यात् । तस्मात्पत्नीदुहितृदौहित्राणां मध्ये कस्याप्येकस्य सत्त्वे दासीपुत्रस्य कृत्स्नधनग्रहणाधिकारो नास्ति, किंतु विद्यमानेन पत्न्याद्यन्यतमेन सहार्धांशभागित्वं भवतीत्यभिप्रायवानाह—एवमसत्स्वित्यादि तत्समांश इत्यन्तम् । अत्र ‘ एवमसत्सु ’ इत्यस्य स्थाने ‘ एवं सत्सु ’ इति पाठो बहुत्रोपलभ्यते, परं सोऽयुक्त इति प्रतीयते । अथ ‘ न सर्वहरत्वम् ’ इति दासीपुत्रस्य सर्वधनहरत्वं निषिध्यते । तच्च ‘ अभ्रातृको हरेत्सर्वम् ’ ( या० स्मृ० २ । १३४ ) इति याज्ञवल्क्यवचनादभ्रातॄणामभावे सत्येव संगच्छते नान्यथा । किंच क्षेत्रजादिपुत्रेषु विद्यमानेषु तेषामेव धनहरत्वं न भार्याया अपि । ‘ न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः ’ ( म० स्मृ० ९ । १८५ ) इति मनुवचनात् । तत्र केव वार्ताऽन्येषामिति । पत्नीकन्ययोरिति । तयोः सत्यो-

विधिबाधापत्तिः। तेन दौहित्रपर्यन्ताधिकारिशृङ्खलायां तदेकतमे सत्यपि न दासीपुत्रस्य सर्वहरत्वं किंतु तत्समांशः। अत एव—

दत्तपुत्रे यथाजाते कदाचित्स्वौरसो भवति।
पितू रिक्थस्य सर्वस्य भवेतां समभागिनौ॥

इत्यपि वचनं शूद्रविषय एव योजनीयम्। तथा—

शूद्रस्य तु सवर्णैव नान्या भार्योपदिश्यते।
तस्यां जाताः समांशाः स्युर्यदि पुत्रशतं भवेत्॥

---

र्यदि दौहित्रस्यापुत्रधनग्रहणाधिकारः स्यादित्यर्थः। क्रमाधिकारेति। 'पत्नीदुहितरश्चैव' (या० स्मृ० २। १३५) इति याज्ञवल्क्यवचनेनाभिहितो यः प्रथमं पत्नीदुहित्रोर्धनग्रहणाधिकारः स बाधितो भवेदित्यर्थः।

अत एवेति। शूद्रविषये क्षेत्रजदत्तकादीनामौरसेन सह समांशभागित्वस्य सिद्धान्तितत्वादेव। दत्तपुत्रे यदा जात इति। दत्तकग्रहणानन्तरं यद्यौरसः स्यात्तदा तौ दत्तौरसौ द्वौ पितुः सर्वस्य धनस्य समभागिनौ स्यातामिति तदर्थः। एतदपि वचनं शूद्रविषयत्वेन लापनीयम्। सिद्धान्तितसमानार्थत्वात्। नतु त्रैवर्णिकविषयकत्वेन। तस्मिंश्चेत्प्रतिगृहीते० इत्यादिवसिष्ठादिभिर्विरोधादिति भावः।

एतद्वत्, शूद्रस्य तु सवर्णैवेति (म० स्मृ० ९। १५७)। शूद्रस्य स्वजातीयैव भार्योक्ता नान्यजातीया। तिस्रो वर्णानुपूर्व्येण...स्वा शूद्रजन्मनः (या० स्मृ० ९। १५७) इति याज्ञवल्क्योक्तेः, तस्यां जाताः पुत्राः सर्वे समानांशस्याधिकारिणः, ते च शतमपि भवेयुरिति तस्यार्थः। अत्र शूद्रस्य परिणीतायां स्त्रियामुत्पन्नानां सर्वेषां समानांशाधिकारित्वमभिधाय पुनः 'यदि पुत्रशतं भवेत्' अनेन चतुर्थचरणेनेतरेषामपि पुत्राणां समानांशाधिकारित्वमभिधीयते। यदीदं केवलमौरसपरं स्यात्तदा 'तस्यां जाताः समांशाः स्युः' इति तृतीयचरणेनैव तदर्थनिर्वाहे चतुर्थचरणोऽवक्तव्यः स्यात्। उच्यते च। तस्माच्चतुर्थचरणेनेतरेषामपि पुत्राणां समांशभागित्वं यत्प्रतिपाद्यते तदपि शूद्रविषयत्वेन योज्यमिति भावः।

जनकपालकयोरुभयोः पित्रोः पुत्रासत्त्वे द्व्यामुष्यायणदत्तक उभयोः पित्रोः सर्वधनाधिकारी भवति। औरसे सति गृहीतस्य दत्तकस्यांशहरत्वं सर्वथा नास्ति। अत्रोभयत्र प्रमाणं 'पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः' (या० स्मृ० २। १३२) इति याज्ञवल्क्यवचनमेव। प्रथमस्थले जनकपालकयोः कुले पूर्वाभावेन परस्य द्व्यामुष्यायणस्योभयोः समग्रधनहरत्वम्। द्वितीयस्थले तु पूर्वस्यौरसस्य सत्त्वेन नोत्तरस्य दत्तकस्यांशभागित्वम। दत्तकग्रहणानन्तरं जनकपालकयोरुभयो-

इत्यत्र वचने शूद्राणां भार्योत्पन्नानां सर्वेषां समांशत्वमभिधाय पुनर्यदि पुत्र-शतमित्यनेन पुत्रान्तराणामपि समांशता प्रतिपादिता। औरसमात्रपरत्वे पूर्वेणैव तत्प्राप्त्या पुनरेतदभिधानं व्यर्थं स्यात् ।

द्व्यामुष्यायणदत्तकस्य तु जनकप्रतिग्रहीत्रोरुभयोरपुत्रत्वे सर्वरिक्थहरत्वं सत्यौरसे गृहीतस्य तु नांशहरत्वं ग्रहणानन्तरमौरसोत्पत्तौ तु जनकधने तदौ-रसार्धहरत्वं ग्रहीतुरसाधारणदत्तकस्य यादृशोंऽशः शास्त्रीयस्तदर्धहरत्वं चेति । यदाह प्रवराध्यायः—यद्येषां स्वासु भार्यास्वपत्यं न स्यात्तदा रिक्थं हरेयु-रिति । तथा नारदः—

द्व्यामुष्यायणका दद्युर्द्वाभ्यां पिण्डोदके पृथक् ।
रिक्थादर्धांशमादद्युर्बीजिक्षेत्रिकयोस्तथा ॥ इति ।

---

रौरसोत्पत्तौ सत्यां तु जनकपितृधनाज्जनकस्य य औरसः पुत्रस्तस्य यावानंशस्त-त्तृतीयांशो द्व्यामुष्यायणेन ह्रियते । जनकपितृधनस्य द्वावंशावौरसेन ग्राह्यौ । तृती-यांशश्च द्व्यामुष्यायणदत्तकेन ग्राह्य इति यावत् । तथा पालकपितृधनस्य त्रयोंऽ-शा औरसेन ग्राह्याश्चतुर्थांशस्तु द्व्यामुष्यायणेन । अथ द्व्यामुष्यायणो गुणवांश्चेत्तेन पालकपितृधनस्य तृतीयांशो ग्राह्यो द्वावंशौ च तदौरसेनेति । तदाह—**ग्रहीतुरसाधारणद-त्तकस्य** यादृशोंऽश इत्यादि । युज्यते चेदम् । द्व्यामुष्यायणदत्तकग्रहणानन्तरं जनकपालकयोरौरसोत्पत्तौ सत्यां ताभ्यामेवौरसाभ्यां जनकस्य पालकस्य च सकलौ-र्ध्वदेहिकादिपुत्रकार्यकरणेन द्व्यामुष्यायणस्य दातृग्रहीत्रोः पित्रोरौर्ध्वदेहिकादिक्रियायाम-नधिकारात्पित्रुपकारकत्वाभावेनौरसापेक्षया न्यूनांशाधिकारित्वस्यैवोचितत्वात् । ‘ उत्पन्ने त्वौरसे पुत्रे तृतीयांशहराः सुताः ’ अत्र द्वितीयचरणे ‘ चतुर्थांशहराः सुताः ’ इति पाठः । इत्येवं कात्यायनवचनाच्च । एवं चात्रार्धशब्दो न समांशवाची किंतु खण्डवाचीति तृतीयांशपरः पर्यवस्यति । उक्तेऽर्थे प्रमाणं प्रदर्शयन्नाह—**यदाह प्रवराध्याय इति** । यदि जनकस्य पालकस्य च भार्यायामपत्यं न स्यात्तर्हि द्व्यामुष्यायणो द्वयोः पित्रोर्धनं हरेदिति तस्यार्थः । अत्र प्रवराध्याये ‘ एषाम्, भार्यासु, हरेयुः ’ इत्यत्र बहुवचनं लक्ष्यभेदेनेति ज्ञेयम् । निरुक्तप्रवराध्यायेन सामान्यत उक्तस्यांशहरत्वस्य तृतीयांशहरत्वपरत्वे प्रमाणं दर्शयति—**तथा नारद इति** । **द्व्यामुष्यायणका दद्युरिति** । द्व्यामुष्याणसंज्ञकदत्तकैर्जनकाय ग्रहीत्रे च पित्रे उभाभ्यां पृथक् पृथक् पिण्डमुदकं च देयम् । अथ च बीजिक्षेत्रिणोर्धना-दर्धांशस्तृतीयांशो ग्राह्य इति तदर्थः । अत्र बीजिक्षेत्रिशब्दौ जनकपालकयोरुपलक्ष-काविति प्रागेवाभिहितम् ॥

क्लीबादिभिर्गृहीतदत्तकादीनां पितामहधनभागानधिकारित्वम् ॥

षष्ठं प्रकरणम् ।

अथान्धपङ्गुप्रभृतिपुत्राणां धनाधिकारित्वात्तेषामौरसक्षेत्रजयोरेव पितामहधनभागित्वश्रुतेस्तद्गृहीतदत्तकपुत्राणां पितामहधनाधिकारः किंतु भरणमात्रम् ।

( अथ षष्ठं प्रकरणम् ) ।

क्लीबोऽथ पतितस्तज्जः ( या० स्मृ० २ । १४० ) । अनंशौ क्लीबपतितौ० ( म० स्मृ० ९ । २०१ ) । क्लीबस्तृतीयाप्रकृतिः । सोऽयं क्लीबश्चतुर्दशविध इति नारदेनोक्तम् । प्रकृतश्लोकस्थमिताक्षरगता व्याख्या द्रष्टव्या । पतितो--ब्रह्महादिः । तज्जः--पतितोत्पन्नः । पङ्गुः पादविकलः । उन्मत्तः--वातिकपैत्तिकश्लैष्मिकसांनिपातिकग्रहावेशलक्षणोन्मादरोगग्रस्तः । जडो--विकलान्तःकरणः । हिताहितावधारणाक्षम इति यावत् । अन्धो- नेत्रेन्द्रियविकलः । अचिकित्स्यरोगः--अप्रतिसमाधेयक्षयादिरोगग्रस्तः । आद्यशब्देनाऽऽश्रमान्तरगतपितृद्वेषोपपातकिबधिरमूकनिरिन्द्रियाणां ग्रहणम् । आश्रमान्तराणि--नैष्ठिकवानप्रस्थोत्तमाश्रमाः । निर्गतमिन्द्रियं यस्मात्स्याद्व्यादिना स निरिन्द्रियः । एते क्लीबादयोऽनंशा रिक्थभाजो न भवन्ति । केवलमशनाच्छादनदानेन पोषणीया भवेयुः । अभरणे तु पतितत्वदोषः । सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा । ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत् । न्याय्यं--भरणयावद्युक्तं धनानुरूपं च । अत्यन्तं--यावज्जीवमित्यर्थः । ( म० स्मृ० ९ । २०२ ) इति मनुवचनात् । इति निरुक्तयाज्ञवल्क्यवचनार्थः । अनेन वचनेन क्लीबान्धपङ्गुप्रभृतिपुत्राणां धनाधिकारित्वं निषिध्य, औरसाः क्षेत्रजास्त्वेषां निर्दोषा भागहारिणः ( या० स्मृ० २ । १४१ ) । एषां क्लीबान्धादीनामौरसाः क्षेत्रजा वा पुत्रा निर्दोषा अंशग्रहणविरोधिक्लीबत्वादिदोषरहिताः सन्तो भागहारिणोंऽशग्राहिणो भवन्ति । तत्र क्लीबस्य क्षेत्रज एव पुत्रः संभवति नौरसः । क्लीबव्यतिरिक्तानामन्धादीनां त्वौरसोऽपि संभवति । औरसक्षेत्रजग्रहणमितरपुत्रव्युदासार्थम् । इत्येवमनेन वचनेन क्लीबान्धादेरौरसक्षेत्रजयोर्द्वयोरेव पुत्रयोः पितामहधनग्राहित्वं श्राव्यते । तेनान्धपङ्ग्वादिभिर्गृहीतानां दत्तकादिपुत्राणां पितामहधनग्रहणाधिकारो नास्तीत्यवगम्यते । किंतु भरणमात्रं कर्तव्यम् । ननु तत्रापि किं प्रमाणमिति चेत् 'अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तयः' ( या० स्मृ० २ । १४२ ) । एषां क्लीबान्धादिपुत्राणां पुत्ररहिताः पत्न्यः सदाचाराश्चेद्भरणीया इत्येवं क्लीबान्धादिभार्याणां भरणविधानेन तद्गृहीतानां दत्तकादीनां भरणं दण्डापूपन्यायेनैवाऽऽयातमिति सर्वं मनसिकृत्याऽऽह--अथान्धपङ्गुप्रभृतीत्यादि दण्डापूपायितत्वादित्यन्तम् ।

अन्धादिभार्याणां भरणविधानेन तद्ग्रहणस्य दण्डापूपायितत्वात् । तथा हि—अन्धपङ्ग्वादीननधिकारिपुत्रानभिधायाऽऽह—

औरसाः क्षेत्रजास्त्वेषां निर्दोषा भागहारिणः ।
अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तयः ।
सुताश्चैषां प्रभर्तव्या यावन्न भर्तृसात्कृताः ॥ इति ।

एवं ग्रहणानन्तरमुत्पन्नौरसेन सह दत्तकस्य विभागदर्शनात्सत्यौरसे गृहीतस्यापि नांशभागित्वमित्याह—

तस्मिञ्जाते सुते दत्ते न कृते च विधानके ।
तत्स्वं तस्यैव वित्तस्य यः स्वामी पितुरङ्गजः ॥

---

'उत्पन्ने त्वौरसे पुत्रे चतुर्थांशहराः स्मृताः' इति 'तस्मिंश्चेत्प्रतिगृहीत औरस उत्पद्यते चतुर्थभागभागी स्याद्दत्तकः' इति च वचनाद्ग्रहणानन्तरमुत्पन्नेनौरसेन सह दत्तकस्य विभागकीर्तनात्सत्यौरसे गृहीतदत्तकस्य त्वंशभागित्वं नास्तीति प्रतीयते । औरसे सति गृहीतस्य पुत्रत्वाभावात् । 'अपुत्रेणैव कर्तव्यः' इत्यत्रापुत्रेणेत्येतद्घटकपुत्रपदस्य मुख्यौरसपरत्वादौरसपुत्राभाववतोऽधिकारोक्तेस्तत्संगतैवकारेण त्वौरसपुत्रवतोऽनाधिकारबोधनादनधिकारिणौरसपुत्रवता गृहीते दत्तके पुत्रत्वोत्पत्तेरव्याप्यापादकत्वात् । तथा च पुत्रत्वोत्पत्तावौरसाभाववद्विधानस्यापि निमित्तत्वमिति भावः । एतद्वत् विधानमन्तरेण परिगृहीतस्यापि नांशभागित्वमित्याह—तस्मिञ्जाते सुते दत्त इति । औरसपुत्रोत्पत्त्यनन्तरं दत्तके गृहीतेऽथवा विधानं विना दत्तके गृहीते सति पितुर्धनस्य न्याय्यो योऽधिकार्यौरसः पुत्रः कृतविधानो दत्तकादिश्च तस्यैव तद्धनम् । इत्यभिधानाद्दत्तकद्वयस्य ग्रहीतृधने नांशतोऽप्यधिकार इत्यवगम्यत इति भावः । तथा मनुरप्याह—अविधायेति । शौनकवसिष्ठबौधायनाद्यन्यतमोक्तविधानानुष्ठानमन्तरा यः पुत्रं परिगृह्णाति तेन स्वधनव्ययेन तादृशदत्तकस्य विवाहमात्रं कार्यं न त्वंशतोऽपि धनं देयमिति तदर्थः । अत्र विवाहविधिमित्युपलक्षणम् । तेन ग्रासाच्छादनमपि दातुं योग्यं भवति । सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा । ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत् (म० स्मृ० ९ । २०२) । न्याय्यं यस्य यावदुपयुक्तं धनानुरूपं च । अत्यन्तं यावज्जीवमित्यर्थः । इति प्रत्यक्षश्रुतन्यायानुसारित्वादिति भावः । अयमत्र निष्कर्षः । अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदा, इति गौणपुत्रोत्पत्तिविधायकेऽस्मिन्वचनेऽपुत्रेणेत्युक्तौरसपुत्राभाववत एव पुत्रप्रतिनिधीकरणविधानाद्गौणपुत्रोत्पत्तावौरसाभाववदेव विधाय विधानमित्येतद्वचनबलाद्वसिष्ठशौनकाद्यन्यतमोक्तविधानस्यापि हेतुत्वेन विधिं विना गृहीतत्वेन ग्रहीतुस्तत्र पुत्रत्वानुत्पादादातुश्च दानेन स्वत्वनिवृत्तेस्तत्र तत्संबन्ध-

तथा मनुः—अविधाय विधानं यः परिगृह्णाति पुत्रकम् ।
विवाहविधिभाजं तं न कुर्याद्धनभाजनम् ॥ इति ।

अन्यजातीयदत्तकस्यापि नांशभागित्वमित्याह—

यदि स्यादन्यजातीयो गृहीतोऽपि सुतः क्वचित् ।

---

स्याप्यभावाच्चाकृतविधानकस्य गृहीतस्य विवाहादिसंस्कारे नान्दीश्राद्धे दातुर्ग्रहीतुर्वा पितॄणां गोत्रस्य चोल्लेखः करणीय इति । अत्र केचित्—विधानरहितपुत्रदानप्रतिग्रहयोर्लौकिकत्वेनाशास्त्रीयत्वादशास्त्रीये च ग्रहीतृस्वत्वोत्पादे दातृस्वत्वनिवृत्तौ च प्रमाणाभावः । तदुक्तं वीरमित्रोदये व्यवहारप्रकाशे नारदेन—दत्त्वा द्रव्यमसम्यग्यः पुनरादातुमिच्छति । दत्ताप्रदानिकं नाम व्यवहारपदं हि तत् ॥ इति । अत्र दानस्यासम्यक्त्वेन ग्रहीतृस्वत्वासंबन्धो दातृस्वत्वानिवृत्तिश्च 'पुनरादातुमिच्छति' इत्यनेनाभिहिताविति तादृशदत्तकसंस्कारादौ दातुर्गोत्रादेरेवोल्लेखः कार्य इति वदन्ति । अन्यथा विधिं विना गृहीतत्वेन ग्रहीतुस्तत्र पुत्रत्वानुत्पादाद्दातुर्दानेन तत्र स्वत्वापगमाच्चायं कस्यापि पुत्रो न भवेदिति त्रिशङ्कुरिवान्तरालेऽवस्थानेन कुलराहित्यं प्रसज्येत । अपरे पुनः—ध्वजाहृतो भक्तदासो० ( म० स्मृ० ८ । ४१५ ) इति दासत्वप्रापककारणाभिधायके मनुवचने दत्रिमस्य दासत्वमुक्तम् । तथा 'माता पिता वा दद्याताम्० ( म० स्मृ० ९ । १६८ ) इत्यत्र च दत्रिमस्य गौणपुत्रत्वमुक्तम् । ततश्च दत्रिमस्य दासत्वं पुत्रत्वं तदुभयसांकर्यं वेति संशये दासत्वपुत्रत्वयोर्विषयविभागः क्रियते । स च यथा—अकृतविधानको दत्रिमो दासः । कृतविधानको दत्रिमस्तु पुत्र इति । दत्रिमपुत्रलक्षणप्रतिपादके माता पिता वेति पूर्वोक्तमनुवचने यमद्भिरित्युक्तेः । तत्राब्ग्रहणं 'सकलदानविधेरुपलक्षणम्' इति दत्तकमीमांसायां मूल एवोक्तत्वात् । तथा च विधानपूर्वकं गृहीतस्य पुत्रत्वं विधिं विना गृहीतस्य च दासत्वमिति सिध्यति । कालिकापुराणे, संहितायां वसिष्ठेन च 'स्वयंदत्तश्च दासश्च षडिमे पुत्रपांसनाः' इति दासस्याधमपुत्रत्वेनोक्तत्वात्तद्बलादेव विधिना ग्रहणाभावेऽपि ग्रहीतुस्तत्र विलक्षणं स्वत्वमुत्पद्यत इत्यङ्गी क्रियते । स्वत्वे वैलक्षण्यं च व्यापकगोत्रसापिण्ड्यादिप्रयोजकत्वेन व्याप्यपुत्रत्वाप्रयोजकत्वेन च । अत एव ग्रहीतुस्तद्विवाहकरणमंशभाक्त्वनिराकरणं चोक्तं संगच्छते । अन्यथा तद्विवाहविधानस्यांशभाक्त्वाप्रसक्तेस्तन्निराकरणस्य चासंगत्यापत्तेः । तस्माद्ग्रहीतुर्दास एव स इति तद्विवाहादौ ग्रहीतृगोत्राद्युल्लेख्यमित्याहुः । विधिना गृहीतस्याप्यन्यजातीयदत्तकस्य ग्रहीतृधनांशग्राहित्वं न भवतीत्याह—यदि स्यादिति । ग्रहीत्रपेक्षया भिन्नजातीयः पुत्रः, स चोत्कृष्टजातीयोऽ-

अंशभाजं न तं कुर्याच्छौनकस्य मतं हि तत् ॥

इत्युक्तप्रायमित्यास्तां विस्तरः ।

रम्यैषा चन्द्रिका दत्तपद्धतेर्दर्शिका लघु ।

मनोरमा संनिवेशै रङ्गिणां धर्मतारणी ॥

इति महामहोपाध्यायश्रीकुबेरकृता दत्तकचन्द्रिका समाप्ता ॥

---

पञ्चत्वजातीयो वा भवतु यदि कदाचिद्दत्तकत्वेन गृहीतः स्यात्तथाऽपि तस्मै धनांशो नैव देयो भवतीत्येतच्छौनकस्यर्षेर्मतमस्तीति तदर्थादित्यादि प्राक् ( पृ० ४ पं० १० ) प्रतिपादितप्रायमिति नेह पुनर्विस्तीर्यते । दत्तकचन्द्रिकाकारमतेन गृहीते विजातीये पुत्रत्वमुत्पद्यते । तच्च शास्त्रसिद्धमिति प्राङ्निरूपितम् । दत्तकमीमांसाकारमतेन तु गृहीते विजातीये न कथमपि पुत्रत्वमुत्पद्यत इति दत्तकमीमांसाव्याख्यायां मञ्जर्यां मत्कृतायां ( पृ० १०४ आरभ्य १०८ पर्यन्तं ) विस्तरेण निरूपितं तत्रत एवावगन्तव्यम् ।

**रम्यैषेति** । पुत्रीकरणविधिसरणेः क्षिप्रं प्रकाशिकाऽत एव रमणीयैषा चन्द्रिका पदपदार्थादीनां सामीचीन्येन रचनाभी रङ्गिणां प्रेक्षावतां मनोहारिणी सती दत्तकसंबन्धिधर्मजातस्योद्धारिण्यस्ति । विद्वद्भिः प्रेक्षकैरस्याः सकाशाद्दत्तकसंबन्धिनः सर्वे धर्मा उद्भियन्त इति भावः ।

दत्तकादेश्चन्द्रिकायाष्टीकेयं नाम शांकरी ।
आनन्दाश्रमसंस्थेन कृता शंकरशास्त्रिणा ॥ १ ॥
मदीयटीका यदि चेदशुद्धा तथाऽपि मूलं सुविशुद्धमेव ।
समागमात्पापिजनस्य गङ्गा भवत्यपूता किमु लोक उच्यते ॥ २ ॥
अशुद्धमस्मिन् स्खलितं ममैतत्समञ्जसं तत्परकीयमेव ।
अतोऽर्थयेऽहं विदुषः प्रतीदं क्षाम्यन्तु सन्तो मम चापलं यत् ॥ ३ ॥
अब्धिषड्वसुभूशाके ( १८६३ ) वत्सरे वृषनामके ।
कार्तिके मास्यर्पिताऽभूत्सच्चिदानन्दपादयोः ॥ ४ ॥

इति श्रीपरमपूज्यगोडबोलेइत्युपाभिधरामशास्त्रिचरणान्तेवासिनो रङ्गनाथभट्टात्मजशंकरशास्त्रिणः कृतिः श्रीकुबेरभट्टकृतदत्तकचन्द्रिकाया व्याख्या शांकरी नाम समाप्तिमगमत् ।

---